जयरामन्यायपञ्चाननकृतविवृतिसहिता

# कुसुमाञ्जलिकारिका

श्रीमदुदयनाचार्यविरचिता



## विद्यावाचस्पति-श्रीरामचन्द्रमिश्र

सम्पादिता




प्रकाशकः



कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालयः, दरभङ्गा

जयरामन्यायपञ्चाननकृतविवृतिसहिता

# कुसुमाञ्जलिकारिका

श्रीमदुदयनाचार्यविरचिता



## विद्यावाचस्पति-श्रीरामचन्द्रमिश्र-

सम्पादिता






प्रकाशकः

कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालयः, दरभङ्गा

प्रथमं संस्करणम्—१०००
प्रकाशनवर्षम्—१९८६ ई०

सम्पादकः
विद्यावाचस्पति श्रीरामचन्द्रमिश्रः

प्रकाशकः
कामेश्वरसिंह-दरभङ्गा-संस्कृत-
विश्वविद्यालयः, दरभङ्गा



मूल्यम् १२।- रू०

मुद्रकः
सरस्वती लक्ष्मी प्रिंटिंग प्रेस
सी-१३, नया औद्योगिक प्रांगण
बेला, दरभंगा

# * आमुखम् *

न्यायपञ्चाननजयरामविरचिता कुसुमाञ्जलिकारिकाव्याविकृतिः प्रकाशनमुपयातीति प्रसादप्रकर्षाय समेषां विदुषाम् ।

उदयनाचार्येणनिरीश्वरवादं दवयितुं कारिकाभिः सिद्धान्ता निरूपिताः । ताश्च कारिकाःग्रन्थकृता व्याख्याता अपि तासां दुर्बोधत्वेन न्यायपञ्चाननो जयरामस्तासां कारिकाणां सरलं सारग्राहि बहुजनगम्यं च व्याख्यानं प्रणिनाय । विश्वविद्यालयपुस्तकालये विद्यमानं हस्तलेखमाधारीकृत्य कुसुमाञ्जलिकारिकायाः संस्करणमिदं प्रकाश्यते ।

आशासे ग्रन्थरत्नमिदं सुमेधसां ज्ञानलोचनरञ्जनाय कल्पिष्यते ।

मार्गशीर्ष-पूर्णिमा | विदुषांवशंवदः
१६-१२-८६ | ब्र० सुरेन्द्रकुमारः

# * प्रस्तावना *

अथायमुपक्रम्यते प्रकाशयितुं जयरामन्यायपञ्चाननकृत-विवृतिसनाथः कुसुमाञ्जलिकारिकाग्रन्थः। कुसुमाञ्जलि र्नाम उदयनाचार्यविरचितो न्यायशास्त्रीयईश्वरसिद्धिपरोग्रन्थः परम-प्रसिद्धइति कथनं भूतार्थव्याहृतिमात्रम्। अस्यकुसुमाञ्जलिग्र-न्थस्यद्विधा रूपम्। एकंकारिकामात्रम्, अपरं चोदयनाचार्यकृत-व्याख्यासनाथं कारिकाकुलस्वरूपम्। मिथिलायां द्वितीयमेवेदं कुसुमाञ्जलिरूपं गद्यपद्यात्मकनाम्नाप्रथते। प्रथमं कारिकामा-त्ररूपं तु वङ्गेषुमुख्यरूपेणप्रसिद्ध्यति प्रान्तान्तरेष्वपिवैरल्येनलब्ध-प्रचारं तद्भवेन्नाम, कारिकाव्याख्यातारोवङ्गीयाएव केवलाः। एतेन कारिकारूपस्य कुसुमाञ्जलिग्रन्थस्य वङ्गेषु वहुलप्रचारता निःसंशया।

## उदयनाचार्यः

कुसुमाञ्जलिप्रणेता श्रीमदुदयनाचार्यः मिथिलाभिजनः करि-यनग्रामवासीचासीदिति न सम्प्रति सन्दिग्धम्। एतद्वंश्या आचार्योपाधिका ब्राह्मणाः सम्प्रत्यपि मिथिलायां लभ्यन्ते। अयं च महापण्डितो न्यायशास्त्रनदीष्णोगोवर्द्धनाचार्यस्य आर्यासप्तश-तीकारस्य वरीयान् शिष्य आसीदिति आर्यासप्तशतीगताल्लेखा-त्प्रतीयते। सहि लेखोयथा—

"उदयनवलभद्राभ्यां सप्तशतीशिष्यसोदराभ्यां मे ।
द्यौरिव रविचन्द्राभ्यांप्रकाशिता निर्मलीकृत्य"

गोवर्द्धनाचार्यश्च लक्ष्मणसम्वत्प्रवर्त्तकस्य लक्ष्मणसेनस्य सभा-पण्डित आसोदिति निम्नलिखितश्लोकादवगम्यते—

"गोवर्द्धनश्चशरण: कविराजउमापतिः ।
.................... समितौ लक्ष्मणस्य तु"

गोवर्द्धनस्य लक्ष्मणसेनसभापण्डितत्वे जयदेवोऽपिसाक्षी, यतश्च-तेनोक्तम्—

"वाचः पल्लवयत्युमापतिधरः सन्दर्भशुद्धिं गिरां
जानीते जयदेव एव शरणः श्लाध्योदुरूहद्रुतेः ।
शृङ्गारोत्तरसत्प्रमेयरचनैराचार्य - गोवर्द्धन-
स्पर्द्धीकोपि न विश्रुतः श्रुतिधरोधोयीकविक्ष्मापतिः"

तदेवं तस्य लक्ष्मणसेनसमसामयिकत्वं सिद्ध्यति । स्वयमुदयनः लक्ष्मणावलीग्रन्थे स्वसमयं निरदिशत्—

"तर्काम्बराब्धिप्रमितेष्वतीतेषु शकाब्दतः ।
वर्षेषूदयनश्चक्रे सुबोधांलक्ष्मणावलीम् ॥"

एतेनसर्वेण उदयनाचार्यस्य एकादशशकाब्दीसमयः साधयितुं सुशकः । स चायमुदयनाचार्यः शङ्करभगवत् पादात् परवर्त्तीति पण्डितप्रसिद्धिरप्यस्मदुक्तार्थेऽनुकूला ।

# उदयनग्रन्थाः

उदयनाचार्येण वैशेषिकदर्शने किरणावली लक्षणावलो चेति द्वौग्रन्थौ न्याये न्यायनिबन्धाख्यातात्पर्यपरिशुद्धिः, न्यायपरिशिष्टा परयर्याया न्यायसूत्रवृत्तिः, आत्मतत्त्वनिवेकः, कुसुमाञ्जलिश्चेति चत्वारः - संहृत्य षडेवग्रन्था विरचिताः। तत्र कुसुमाञ्जलिग्रन्यस्य निर्माणे ईश्वरसिद्धिः प्रयोजनम्। अयं च ग्रन्थो द्विविधः केवलकारिकात्मकः, स्वोपज्ञवृत्तिसहितकारिकारिकात्मकश्च। तत्र द्वितीयोग्रन्थोऽतिगूढ़ः प्रकाशकाशिकाबोधनी मकरन्दादिटीकन्गणैरतीवसूक्ष्मेक्षिकया विवेचितश्च सन्प्रसिद्धयति। प्रथमः पुनः कारिकामात्ररूपो लघुकलेवरोऽपि सर्वानर्थान् संगृह्णन्नतीव लोकोपकारको विविधाभिष्टीकाभिरुपेतः संख्यायते। कारिकाणां विवृतिषु प्रथमा–

१. हरिदासकृता विवृतिः

म० म० कामाख्यानाथ तर्कवागीशकृतटीकया सहिता मुद्रिता प्रसिद्धा च।

२. रामभद्रसार्वभौमकृताव्याख्या

[कलिकाता विश्वविद्यालयेन प्रकाशिता]

३. रुद्रतर्कवागीशकृता व्याख्या

[काश्यां मातृका वर्तते]

४. रघुदेव तर्कालङ्कारकृता व्याख्या

[मातृका काश्यां वर्त्तते]

# जयरामन्यायपञ्चाननकृता व्याख्या

## प्रक्रान्तप्रकाशनाः

जयरामन्यायपञ्चाननः

सुगृहीतनामधेयस्य रामभद्रसार्वभौमभट्टाचार्यस्य (१५२५-७५ई.) तुरीयःशिष्यो जगद्गुरुपदजुष्टो जयरामन्यायपञ्चाननो वङ्गीय आसीत्। एतस्य विशिष्य परिचयो वाराणसीतः प्रकाशितायाः न्यायसिद्धान्तमालाया भूमिकायां लभ्यः एतत्कृताग्रन्थाः—

१. अनुमानदीधितिगूढार्थविद्योतनम्
(वाराणस्यां, लण्डनेऽन्यत्र च मातृकाः प्राप्यन्ते)

२. गुणदीधिति विवृतिः (काश्यामन्यत्र च मातृका)

३. आख्यातवादव्याख्या (तञ्जोरनगरे मातृका)

४. नञ्वादव्याख्या (सूचना न्यायसिद्धान्तमालाभूमिकायाम्)

५. कुसुमाञ्जलि कारिका विवृतिः (प्रकाश्यमाना)

६. शब्दालोक रहस्यम् (आख्यातवादटीकासमाप्तावुल्लेखः)

७. न्यायसिद्धान्तमाला (अंशतः काश्यां प्रकाशिता)

८. पदार्थमाला (वैशेषिकम्) तञ्जोरनगरे मातृका)

९-१० कारकवाद समासवादौ (बंबईनगरात् प्रकाशितेवादार्थसंग्रहे)

११. अन्यथाख्यातिवादः (तञ्जोरनगरे मातृका)

१२. काव्यप्रकाशटीका (पुण्यपत्तने खण्डिता मातृका)

काशीस्थः प्रसिद्धोग्रन्थकारो लौगाक्षिभास्करोजयरामस्य शिष्य आसीत् । स्वगुरुकृतायाः पदार्थमालाग्राष्टीकायांप्रकाशाख्यायामन्ते पुष्पिका निम्नलिखितरूपा—

"श्रीमता सकलशास्त्रपारंगमत्वजनिततेजोविशेषवता तत्त्वादिनिरासप्रसूतजयोऽस्मिन् रमत इत्यन्वर्थसंज्ञावता"

[इयंव्याख्या मातृकारूपेण तञ्जोरनगरेस्थिता] ई० १६५७ वर्षीयनिर्णयपत्रे जयरामस्य स्वाक्षरं वर्त्तत इति तस्य समयोऽपि निरूपितः ।

[एतत्सर्वं विवरणं स्व० दिनेशचन्द्रभट्टाचार्यकृतात् वङ्गे न्यायचर्चा नामकाद्ग्रन्थात् संकलय्य प्रियसुहृदा प्रो० श्रीअनन्तलालठक्कुरमहाशयेन मह्यं सूचितम् इति ते परमधन्यवादार्हाः]

अस्मिन् कुसुमाञ्जलिकारिकाविवृतिग्रन्थे स्वसजातीयग्रन्थान्तरेभ्यस्त्रयो भेदका उत्कृष्टतागुणाविद्यन्ते ।

तत्र प्रथमो यथा–

अत्र कारिकाणां व्याख्याक्रमे उदयनाचार्यैः स्वकृतव्याख्याने यावन्तोऽर्था विवक्षितास्ते सर्वेऽपि संक्षिप्य प्रकाशिताः कोपि अर्थो न परित्यक्तो येन न्यूनता प्रतिभासेत । यत्र हरिदास्यादौ भूयांसोऽर्थाः परित्यक्ताः, द्वितीयोगुणोऽस्यग्रन्यस्योदयनाभिप्रायप्रकाशनाय प्रकाशादिप्रसिद्धव्याख्योक्तार्थसंग्रहः अत्रहिक्रमे जयरामेण प्रकाशप्रकाशिकामकरन्दादिव्याख्योक्तार्थानां सङ्ग्रहेनोदासि-

तम्। तृतीयश्चरमश्चगुणोऽस्य विवृतिग्रन्थस्यस्पष्टता, या बह्वर्थ-संग्रहप्रवृत्तावपि आमूलचूलमस्य सहचरीभवन्ती विदुषः सातिशयं रञ्जयति।

तदेभिर्गुणैरतिहृद्यतामुपेतस्याप्यस्य ग्रन्थस्याद्यावधि प्रकाशनपथापेततया विदुषां खेदमुत्प्रेक्ष्य मया कठिनेऽप्यत्रवर्त्यंनि विदुषांमेव सहानुभूतिं मनसिकृत्यपादो निहित स्तदत्र ते क्षमाशीला ममत्रुटीरवश्यं क्षमाविषयतांनेष्यन्तीति विश्वसिमि।

विदुषामनुचरः

**रामचन्द्रमिश्रः**



# कुसुमाञ्जलिकारिका:

## प्रथम स्तवक:

[ १ ]

सत्पक्षप्रसरः सतां परिमलप्रोद्‌बोधबद्धोत्सवो
विम्लानो न विमर्दनेमृतरसप्रस्यन्दमाध्वीकभूः ।
ईशस्यैष निवेशितः पद युगे भङ्गायमाणं भ्रम-
च्चेतोमे रमयत्वविघ्नतधो न्यायप्रसूनाञ्जलिः ।

[ २ ]

स्वर्गापवर्गयो द्वारमानतन्ति मनोषिणः ।
यदुपास्तिमसावत्र परमात्मा निरूप्यते ।।

[ ३ ]

न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ।।

[ ४ ]

सापेक्षत्वादनादित्वाद्‌वैचित्र्याद्विश्ववृत्तितः ।
प्रत्यात्मनियमाद्‌भुक्त रस्ति हेतुरलौकिकः ।।

[ ५ ]

हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्नच ।
स्वभावबर्णना नैवमवधे र्नियतत्वतः ।।

[ ६ ]

प्रवाहो नादिमानेष न विजात्येकशक्तिमान् ।
तत्त्वे यत्नवता भाव्यमन्वयव्यतिरेकयोः ॥

[ ७ ]

एकस्य न क्रमः क्वापि वैचित्र्यञ्च समस्यन ।
शक्तिभेदो न चाभिन्नः स्वभावो दुरितक्रमः ॥

[ ८ ]

विफला विश्ववृत्तिर्नो न दुःखैकफलापि वा ।
दृष्टलाभफला वापि विप्रलम्भोऽपि नेदृशः ॥

[ ९ ]

चिरध्वस्तं फलायालं न कर्मातिशयं विना ।
सम्भोगो निर्विशेषाणं न भूतैः संस्कृतैरपि ॥

[ १० ]

भावो यथा तथाऽभावः कारणं कार्यवन्मतः ।
प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः ॥

[ ११ ]

संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः ।
स्वगुणः परमाणूनां विशेषाः पाकजादयः ॥

[ १२ ]

निमित्तभेदसंसर्गादुद्भवानुद्भवादयः ।
देवताः सन्निधानेन प्रत्यभिज्ञानतोऽपि वा ॥

[ १३ ]

जयेतरनिमित्तस्य वृत्तिलाभाय केवलम् ।
परीक्ष्यसमवेतस्य परीक्षाविधयो मताः ॥

[ १४ ]

कर्तृधर्मा नियन्तार श्चेतिता च स एव न ।
अन्यथाऽनपवर्गः स्यादसंसारोऽथ वा पुनः ॥

[ १५ ]

नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात् ।
वासनासंक्रमो नास्ति न च गत्यन्तरं स्थिरे ॥

[ १६ ]

न वैजात्यं विना तत्स्यात् न तस्मिन्ननुमा वेत् ।
विना तेन न तत्सिद्धि नध्यक्षं निश्चयं विना ॥

[ १७ ]

स्थैर्यदृष्ट्योर्न सन्देहो न प्रामाण्ये विरोधतः ।
एकता निर्णयो येन क्षणे तेन स्थिरो मतः ॥

[ १८ ]

हेतुशक्तिमनादृत्य नीलाद्यपि न वस्तुसत् ।
तद्युक्तं तत्र तच्छक्तमिति साधारणं नकिम् ॥

[ १९ ]

पूर्वभाबो हि हेतुत्वं मीयते येन केन चित् ।
व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा नहि ॥

[ २० ]

इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो
मूलत्वात्प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता ।
देवोसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः
साक्षात् साक्षितया मनस्यभिरतिं बध्नातु शान्तोमम ॥

★

## ☬ अथ द्वितीयः स्तवकः ☬

[ १ ]

प्रमायाः परतन्त्रत्वात् सर्गप्रलयसम्भवात् ।
तदन्यस्मिन्नविश्वासान्न विधान्तरसम्भवः ॥

[ २ ]

वर्षादिवद्भवोपाधिवृत्तिरोधः सुषुप्तितः ।
उद्भिद्वृश्चिकवद्वर्णा मायावत् समयादयः ॥

[ ३ ]

जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः ।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ॥

[ ४ ]

कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन् ।
हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीड़ति ॥
तं देवं निरवग्रहस्फुरदभिध्यानानुभावं भवं ।
विश्वासैकभुवं शिवं प्रति नमन् भूयासमन्तेष्वपि ॥

# अथ तृतीयः स्तबकः

[ १ ]

योग्यादृष्टिः कुतोऽयोग्ये प्रतिबन्धिः कुतस्तराम् ।
क्वायोग्यं बाध्यते शृङ्गं कानुमानमनाश्रयम् ॥

[ २ ]

व्याक्त्यभाववत्तैव भाविकी हि विशेष्यता ।
अभावविरहात्मत्वं वस्तुनः प्रतियोगिता ॥

[ ३ ]

दुष्टोपलम्भसामग्री शशशृङ्गादियोग्यता ।
न तस्यां नोपलम्भोऽस्ति नास्ति सानुपलम्भने ॥

[ ४ ]

इष्टसिद्धिः प्रसिद्धेऽशे हेत्वसिद्धिरगोचरे ।
नान्या सामान्यतः सिद्धिर्जातावपि तथैव सा ॥

[ ५ ]

आगमादेः प्रमाणत्वे बाधनादिनिषेधनम् ।
आभासत्वे तु सैव स्यादाश्रयासिद्धिरुद्धता ॥

[ ६ ]

दृष्ट्यदृष्ट्योर्न संदेहो भावाभावविनिश्चयात् ।
अदृष्टिबाधिते हेतौ प्रत्यक्षमपि दुर्लभम् ॥

[ ७ ]

शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥

[ ८ ]

परस्परविरोधे हि न प्रकारान्तरस्थितिः ।
नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः ॥

[ ९ ]

साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते ।
अर्थापत्तिरसौ व्यक्तमिति चेत् प्रकृतं न किम् ॥

[ १० ]

सम्बन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह ।
प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः ॥

[ ११ ]

सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः ।
समयो दुर्ग्रहः पूर्वं शब्देनानुमयापि वा ॥

[ १२ ]

श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ।
पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन सङ्गतिः ॥

[ १३ ]

अनैकान्तः परिच्छेदे सम्भवे च न निर्णयः ।
आकाङ्क्षा सत्तया हेतुर्योग्यासत्तिरबन्धना ॥

[ १४ ]

निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये ।
व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता ॥

[ १५ ]

व्यस्तपुंदूषणाशङ्कैः स्मारितत्वात् पदैरमी ।
अन्विता इति निर्णीते वेदस्यापि न तत् कुतः ॥

[ १६ ]

न प्रमाणमनाप्तोक्तिर्नादृष्टे क्वचिदाप्तता ।
अदृश्यदृष्टौ सर्वज्ञो न च नित्यागमः क्षमः ॥

[ १७ ]

न चासौ क्वचिदेकान्तः सत्त्वस्यापि प्रवेदनात् ।
निरञ्जनावबोधार्थो न च सन्नपि तत्परः ॥

[ १८ ]

हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा ।
तदभावात् प्रवृत्तिर्न कर्मवादेऽप्ययं विधिः ॥

[ १९ ]

अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः ।
न मानयोर्विरोधोऽस्ति प्रसिद्धे वाऽप्यसौ समः ।

[ २० ]

प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात् ।
अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः ॥

[ २१ ]

प्रतियोगिनि सामर्थ्याद्व्यापाराव्यवधनातः ।
अक्षाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात् ॥

[ २२ ]

अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनात् ।
प्राप्त्यन्तरेऽनवस्थानान्न चेदन्योऽपि दुर्घटः ॥

[ २३ ]

प्रत्याक्षादिभिरेभिरेवमधरो दूरे विरोधोदयः
प्रायो यन्मुखवीक्षणैकविधुरैरात्माऽपि नासाद्यते ।
तं सर्वानुविधेयनेकमसमस्वच्छन्दलीलोत्सवम्
देवानामपि देवमुद्भवदतिश्रद्धाः प्रपद्यामहे ॥

★

# अथ चतुर्थः स्तबकः

[ १ ]

आप्ताप्तेरधिकप्राप्तेरलक्षणमपूर्वदृक् ।
यथार्थोऽनुभवो मानमनपेक्षतयेष्यते ॥

[ २ ]

स्वभावनियमाभावादुपकारो यि दुर्घटः ।
सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा ॥

[ ३ ]

अनैकान्तादसिद्धेर्वा न च लिङ्गमिह क्रिया ।
तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके ॥

[ ४ ]

अर्थेनैव विशेषो हि निराकारतया धियाम् ।
क्रिययैव विरोषो हि व्यवहारेषु कर्मणाम् ॥

[ ५ ]

मितिः सम्यक्परिच्छित्तिस्तद्वत्ता च प्रमातृता ।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥

[ ६ ]

साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितो
भूतार्थानुभवे निविष्टनिखिलप्रस्ताविवस्तुक्रमः ।
लेशादृष्टिनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः
शङ्कोन्मेशकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः ॥



## अथ पञ्चमः स्तबकः

[ १ ]

कार्य्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः ।
वाक्यात् सङ्ख्याविशेषाश्च साध्यो विश्वविदव्ययः ॥

[ २

नवाधोऽस्योपजीव्यत्वात् प्रतिबन्धो त दुर्वलः ।
सिद्ध्यसिद्ध्योर्विरोधौन नासिद्धिरनिबन्धना ॥

[ ३ ]

तर्काभासतयान्येषां तर्काशुद्धिरदूषणम् ।
अनुकूलस्तु तर्कोऽत्र कार्यलोपो विभूषणम् ॥

[ ४ ]

स्वातन्त्र्ये जड़ताहानिः नादृष्टं दृष्टघातकम् ।
हेत्वभावे फलाभावो विशेषस्तु विशेषवान् ॥

[ ५ ]

कार्यत्वान्निरूपाधित्वमेवं धृतिविनाशयोः ।
विच्छेदेन पदस्यापि प्रत्ययादेश्च पूर्ववत् ॥

[ ६ ]

उद्देशएव तात्पर्यं व्याख्या विश्वदृशः सती ।
ईश्वरादिपदं सार्थं लोकवृत्तानुसारतः

[ ७ ]

प्रवृत्तिः कृतिरेवात्र सा चेच्छातो यतश्च सा ।
तज्ज्ञानं विषयस्तस्य विधिस्तज्ज्ञापकोऽथवा ॥

[ ८ ]

इष्टहानेरनिष्टाप्तेरप्रवृत्तेर्विरोधतः ।
असत्त्वात् प्रत्ययत्यागात् कर्त्तृधर्मो न सङ्करात् ॥

[ ९ ]

कृताकृतविभागेन कर्त्तृरूपव्यवस्थया ।
यत्नएवकृतिः पूर्वा परस्मिन्सैव भावना ॥

[ १० ]

भावनैव हि यत्नात्मा सर्वाख्यातस्य गोचरः ।
तया विवरणध्रौव्यादाक्षेपानुपपत्तितः ॥

[ ११ ]

आक्षेपलभ्ये संख्येये नाभिधानस्य कल्पना ।
संख्येयमात्रलाभेतु साकाङ्क्षेणव्यवस्थितिः ॥

[ १२ ]

अतिप्रसङ्गान्नफलं नापूर्वं तत्त्वहानितः ।
तदलाभान्न कार्यञ्च न क्रियाप्यप्रवृत्तितः ॥

[ १३ ]

असत्त्वादप्रवृत्तेश्च नाभिधापि गरीयसी ।
बाधकस्यसमानत्वात् परिशेषोऽपि दुर्लभः ॥

[ १४ ]

हेतुत्वादनुमानाच्च मध्यमादौ वियोगतः ।
अन्यत्र क्लृप्तसामर्थ्यान्निषेधानुपपत्तितः ॥

[ १५ ]

विधिर्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः ।
अभिधेयोऽनुमेयात्तु कर्त्तुरिष्टाभ्युपायता ॥

[ १६ ]

कृत्स्न एव च वेदोऽयं परमेश्वरगोचरः ।
स्वार्थद्वारैव तात्पर्यं तस्य स्वर्गादिवद्विधौ ॥

[ १७ ]

स्यामभूवं भविष्यामीत्यादौ संख्याप्रवक्तृगा ।
समाख्यापि च शाखानांनाद्यप्रवचनादृते ।

[ १८ ]

इत्येवं श्रुतिनितिसंप्लवजलैर्भूयोभिराक्षालिते
येषां नास्पदमादधासि हृदये ते शैलसाराशयाः ।
किन्तुप्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तका:
काले कारुणिकत्वयैव कृपया ते तारणीयानरा: ॥

[ १६ ]

अस्माकं तु निसर्गसुन्दर चिराच्चेतो निमग्नं त्वयी-
त्यद्धाऽऽनन्दनिधौ तथापि तरलंनाद्यापि सन्तृप्यते ।
तन्नाथ त्वरितं विधेहि करुणां येन त्वदेकात्मतां
याते चेतसि नाप्नुवाम शतशो याम्या: पुनर्यातना: ॥

[ २० ]

इत्येष नीतिकुसुमाञ्जलिरुज्ज्वलश्री-
र्यद्वासयेदपि च दक्षिणवामकौ द्वौ ।
नो वा, तत: किममरेशगुरोर्गुरुस्तु
प्रीतोऽस्त्वनेन पदपीठसमर्पणेन ॥

इति कुसुमाञ्जलिकारिका: ।



श्रीगणेशायनमः ।

# ❋ कुसुमाञ्जलिकारिकाविवृतिः ❋

" नत्वेशं जयरामोसौ न्यायपञ्चाननः कृती ।
विवृणोति बुधप्रीत्यै कुसुमाञ्जलिकारिकाः" ।

विघ्नहतये विहितं मङ्गलं व्याख्यातृश्रोतॄणामनुषङ्गतोपि मङ्गलाय च निबध्नन् प्रयोजनाभिधेयसम्बन्धग्रन्थनामान्याह—

सत्पक्षप्रसरः सतां परिमलप्रोद्‌बोधबद्धोत्सवो,
विम्लानो न विमर्द्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः ।
ईशस्यैष निवेशितः पदयुगे भृङ्गायमाणंश्रम-
च्चेतोमे रमयत्वविघ्नमनघो न्यायप्रसूताञ्जलिः ।

एष न्यायप्रसूनाञ्जलिः मे चेतोऽविघ्नं यथा स्यादेवं रमयतु-इष्टेन सह योजयतु । ईशस्य पदयुगे रमयतु तच्चिन्तारतं करोत्विति वा, मे कुसुमाञ्जलिः सतां चेतो रमयतु, सुखयत्वित्यन्ये । अनघः शब्ददोषरहितः, विषयदोषशून्यत्वस्य पूर्वार्द्धेन लब्धत्वात्, भगवद्विषयतया पापनाशक इति वार्थः ।

न्यायः प्रतिज्ञादिपञ्चकं स प्रसूनाञ्जलिरिव अनुपात्तधर्मेण साम्यविवक्षायामुपमितिसमासस्य भाष्याब्धिरतिगम्भीर इत्यादौ व्युत्पादितत्वात् । स एव प्रसूनाञ्जलिरिति महद्भि रुक्तमपि न युक्तम् । भृङ्गायमाण चेतो रमयत्वस्योपमासाधकस्य सत्वात् । साम्यं व्यंग्यमित्यप्ययुक्तम् । प्रसूनाञ्जलिरित्यत्र सारोपायाः स्वीकारे रुपकमेवान्यथा साम्यस्य लक्ष्यत्वात् । श्लेषस्तु न प्रकरणेन न्यायस्यैव बोधादिति दिक् ।

अत्राञ्जलेः प्रसूनमिति समासः राजदन्तादिवत्, "तौ युतावञ्जलिः पुमानितिकोषाद्य तयोः करयोरेवाञ्जलिपदार्थत्वात् । इत्थञ्च-दद्याज्जलाञ्जलिमित्यादयोप्युपपाद्याः । पद्यतेऽनेनेतिपदं प्रम णतर्करूपं तद्द्वये निवेशितः । तत्फलतात्पर्येण प्रयुक्तः भृङ्गायमाणं भृङ्गतुल्यंकुसुमाञ्जलि तुल्येन योजितेष्टफलत्वात्, भ्रमणशीलत्वाच्च । भ्रमत इष्टफलाय कुसुमाञ्जलितुल्यम नुसरत । अर्थ दोषाभावमाह । सत्पक्षेति । सतिपक्षतावच्छेदकावच्छिन्ने पक्षे सिषाधयिषितसाध्यके प्रकृष्टः प्रमात्ववान् सरोज्ञानं साध्यहेत्वोर्यस्मात्, तेनाश्रयासिद्धिसिद्धसाधनार्थान्तरबाधभागासिद्धिसाध्यप्रसिद्धिस्वरूपासिद्धयो व्युदस्ताः ।

सतांसाधूनामीश्वरमननार्थिनाम् इदमान्वयितस्य नित्यसापेक्षत्वात् परिसर्वतः मलः सम्बन्धः व्याप्तिस्वरूपः तस्य प्रोब्दोधने वद्ध उत्सवः उद्देश्य सिद्ध या आनन्दो येन, एतेन व्याप्यत्वासिद्धिसव्यभिचारविरोधानां निरासः । विमर्द्दने प्रतिहेतु परामर्शे न विम्लानः कार्याकारी न, एतेनासत्प्रतिपक्षितत्वं प्रयोजनमाह । अमृतेति, अमृतं-मोक्षः, रसः-इष्यमाणः । कृदभिहित इति न्यायात्, प्रस्यन्द उत्पद्यमानम् । तेन मोक्षस्यासाध्यताव्युदासः तदेव माध्वीकंतस्य भू त्पत्तिनिदानम् ।

अत्र श्लिष्टशब्दमहिम्ना विशेषणानामभेदाध्यवसायाम, साधारण धर्मलाभः । तत्र न्यायोपात्तः प्रसूनाञ्जलिरित्यत्र श्लेषस्तुअकिञ्चित्करः, विशेषणबोधकानामेव तदुपयोगात्, तद्यथा सन समीचीनः । पक्ष प्रसरोदल विकासोयस्य सतां विदग्धानां परिमलप्रोब्दोधेन वद्ध उत्सवो येन विमर्द्दने संवर्षणे यो म्लानः जातान्यसंस्थानः तदन्यः- अमृततुल्यरसं यत्प्रस्यन्दमान माध्वीकं तस्यभूः भृङ्गायमाणं भ्रमत्, इति तु यथाश्रुतन्यायप्रसूनाञ्जलिपदेन क वक्त सङ्केतात ग्रन्थ एवोच्यते, पदयोः परिवृत्तिसहत्वेनन्यायकुसुमाञ्जलिरप्युच्यते ।

अतएव चरमश्लोके नीतिकुसुमाञ्जलिरिति वक्ष्यति । इत्थञ्च प्राकरणिकग्रन्थबोधे न्यायोपात्तः प्रसूनाञ्जलिरित्यार्थ परार्थमहिम्ना साम्यं प्रतीयते इत्यपि वदन्ति । यद्यपि न्यायस्य परार्थानुमाने प्रयोगात् श्रवणान-

न्तरं स्वार्थानुमाने न तदुपयोगः, तथापि स्वार्थानुमानविषयेपि सत्यां परविप्रतिपत्तौ अप्रामाण्यशङ्कापद्येतेति, तदर्थं न्यायादिरप्युपादेयः।

नवाअरे पत्युः कामाय पतिः प्रियोभवत्यात्मनस्तु कामाय पतिः प्रियो-भवतीत्याश्रुत्या आत्मानं चेद् विजानीयादहमस्मीति पूरुषः, किमिच्छन् कस्य कामायेत्यादि स्मृत्या च स्वात्मसाक्षात्कार एवमोक्षहेतु रिति गम्यते।

युक्तञ्चैतत्, तस्यैव मिथ्याज्ञान विरोधित्वादिति तन्मननमेव मोक्षप्रयो-जकम्, तदीशपदयुगे निवेशितस्य न्यायस्य क्वोपयोग इत्यत्राह—

"स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः।
यदुपास्तिमसावत्र परमात्मा निरूप्यते"।

स्वर्गापवर्गयोः- स्वर्गतुल्यजीवन्मुक्ति परममुक्त्योः। पापनाशद्वारास्वात्म-साक्षात्कारोपकारकतया वा मुक्तावुपयोगित्वं तदुक्तं सहि तत्वतोज्ञातः आत्म-साक्षात्कारस्योपकरोतीति।

जीवात्मैकगत प्रियत्व बोधिकया तमुपक्रम्योक्तमात्मावाअरे द्रष्टव्य इत्यादि-श्रुत्या वस्तुतः "तमेवविदित्वाऽतिमृत्युमेतीति" ईशपरं श्रुतेरीश्वर साक्षात्कारद्वारैव, तथा तत्त्वमसि श्वेतकेतो इति जीवेश्वराभेदपरया न्यायनये तद्भावनपरया वा श्रुत्याजीवात्मनि ईश्वराभेदज्ञानस्य कारणत्वंलभ्यत इत्यप्याहुरितीश्वरो निरूप्यतेमननविषयीक्रियते, उपास्तिरुपासनादयाद्यप्यास् धातोरुपासनेत्येव भवतिण्यासग्रन्थो युजिति विशेषानु शासनान। तथाप्यसूक्ष-पणे इति धातोरुपास्तिररिति समर्थनीयम्, उपसर्गेणधात्वर्थं इति न्यायात् तदन्यार्थलाभः। अतएव वामनेनोपास्य इत्यादयस्तद्धातुनैव साधिताः। बहुलवचनात्क्वचिदपवाद विषयेप्युत्सर्गं प्रवृत्ते रासधातोरेव क्तिन् प्रत्यय इत्यन्ये।

प्रकांशकत स्तुश्तिप् प्रत्यय एवायंनिर्देश इत्यप्याहुः। तत्र श्तिपोधातु-त्वविशिष्टे शक्तिः, आसधातुः स्वरूपरः तेनासधातुरिति बोधः। एवमन्यत्रापि,

एवञ्चोपासधातुबुद्धौ तेन शक्त्योपासनमुपस्थाप्यते, वस्तुतश्शितपैव स्वशक्यत्वात्मकलक्षणया तद्रुपस्थाप्यते, द्विरेफादिपदवत्, अत्र तत्तत्कारकविहित प्रत्ययानां कारकान्तरेषु साधुत्वात् शितपोऽर्थान्तरेसाङ्कुवेपि स्वप्रकृत्यर्थे तदभावः। अतएवेक्षतेर्नाशब्द मिति वेदान्तसूत्रम्।

इह यद्यपि यं कमपि पुरुषार्थमर्थयमानाः शुद्ध-बुद्धस्वभव इत्यौपनिषदाः। आदि विद्वान् सिद्ध इति कापिलाः। क्लेशकर्मविपाकाशयैरपरामृष्ट्रो निर्माणकायमधिष्टाय सम्प्रदाय प्रद्योतकोनुग्रहकश्चेति पातञ्जलाः। लोकवेदविरुद्धैरपिनिर्लेपः स्वतन्त्रश्चेति महापाशुपताः। शिव इति शैवाः। पुरुषोत्तम इति पौराणिकाः। यज्ञपुरुष इति याज्ञिकाः। सर्वज्ञ इति सौगताः। निरावरण इति दिगम्वराः। उपास्यत्वेन देशित इति मीमासकाः। लोकव्यवहार सिद्ध इति चार्वाकाः।

उक्तेषु यावदुपपन्नं तद्युक्त इति नैयायिकाः। किम्वहुन यं कारवोपि विश्वकर्मेत्युपासते जातिगोत्रप्रवरशाखाकुलधर्मादिवदासंसारं प्रसिद्धानुभावे सन्देहएव नास्ति किं निरुपणीयम्।

"न्यायचर्चेयमीशस्य मननव्यपदेशभाक्।
उपासनैव क्रियते, श्रवणानन्तरागता ॥"

इयं न्यायचर्चाऽनुमितिरूपा यत्क्रियते सोपासनैव मुक्तिप्रयोजिकैव, यतः श्रवणानन्तरंश्रोतव्यो मन्तव्य इति श्रुत्या बोधिता तथाचोक्तप्रसिद्ध्या श्रुत्या च साध्यस्य निश्चयेपिन पक्षताहानिः, सिसाधयिषासत्त्वादिति न न्यायेन ज्ञापनमनुपपन्नम्, शतशः श्रुतेप्यर्थे विनामनन शङ्ककस्याश्रद्धामलक्षालनतदुक्तं मन्तव्यश्चोपपत्तिभिरिति।

ननु आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुतेः श्रवणमननादिभिरात्मा द्रष्टव्य इत्यर्थः। अग्निहोत्रं जुहोति यवागूं पचतीति पदार्थक्रमस्य बलवत्त्वात्। तथा च आदौ श्रवणमननमेवोचितमिति चेत्सत्यम्। श्रुतो हि भगवान् श्रुतिस्मृतिपुराणेतिहासेष्विदानीम्मन्तव्य इति।

अत्र-स्मृत्यादिकं संवादार्थमितिबहूनां मतम्। मिश्रास्तु श्रोतव्यः श्रुतिवाक्येभ्य इत्यत्र श्रुतिपदं प्रमाणशब्दमात्रपरम्। अन्यथा नियमादृष्ट कल्पनापत्तेः। नचैवम् गौरवेण मुख्यार्थत्यागे विद्याप्रच्युतिभयाद्रूढ़ित्यागः स्यादिति वाच्यम्, विशेष्यतावच्छेदकप्रकारेण विशिष्टवाचक पदेन बोधे लक्षणाविरहात्। अतएव विना लक्षणां श्येनादाविष्टसाधनताबोधः। अतएव न प्रमाणमात्रपरत्वम्। श्रुतपदशक्तौ मुख्यविशेष्येप्रमाणत्वस्य साक्षाद-प्रकारकत्वात्। तन्मात्रेण तद्बोधनेलक्षणापत्तेः। अतएवप्रमाण शब्द-जन्य शाब्द बोधस्यैव तत्प्रयोजकत्वाय नियमादृष्टकल्पनमपि, नियमादृष्टं चादृष्ट विशेषो विशिष्यैव कार्यकारणभावो वा इत्यन्यदेतदित्याहुः।

किञ्च येन रुपेणोभयवादिसिद्धत्वं तदन्यरुपेण मननोपायश्च यदिपूर्वांग संशयोपि सम्भवति, दृश्यन्ते ह्यत्रवापि विप्रति पत्तयः। परलोकसाधनस्या-दृष्टस्य कैश्चिदनुपगमात्। सतिचादृष्टे तदधिष्ठातृतयेश्वरः साधनीयः। अचेतनस्य कारणस्य तदधिष्ठानेनैव कार्यजनकत्वात्, तदधिष्ठानं तद्वृत्ति प्रत्यक्षादिसहकारित्वं नापिपरलोकसाधनानुष्ठानकारितया तत्सिद्धिः।

वेदादित एव यागादौ स्वर्गादिसाधनतां ज्ञात्वा तदनुष्ठाने सम्भवति तदभावावेदकप्रमाणसत्वात, क्षित्यादिकर्त्तुरनुपलम्भेन द्वारसिद्धेः, सत्वेपि तस्याप्रमाणत्वात्। नित्यज्ञानं हि न प्रमासु गृहीतग्राहित्वरुपं तल्लक्षणायो-गात्, नवा ईश्वरस्तत्करणं कर्त्ताविति प्रमाकरणत्वं तत्कर्तृत्वलक्षणंप्रमाणत्वा भावात् न तदुक्तत्वेन वेदे प्रामाण्यनिश्चय इति कथं यागादौ प्रवृत्तिः।

किञ्च—तत्साधकम्मानन्नास्ति तथा हि न तत्र-प्रत्यक्षं मानम्, अती-न्द्रियत्वात्। नापिक्षितिः कर्तृजन्या कार्यत्वादित्यनुमानम्। शरीरहेतुक-

त्वादेरुपाधित्वात्, नवा वेदः- परैस्तत्प्रामाण्यानभ्युपगमादिति दिक्।

प्रकाशकृतस्तु सत्यामपि सिषाधयिषायां परार्थानुमानस्थले विप्रतिपत्तिजन्मानमेव आद्यार्थं संशयमङ्गीकृतवन्तः। तत्र परलोकस्याहेतुकत्वात्, तद्धेतु विशेषोऽदृष्टं सुतरां नास्तीत्यभिप्रायवतां विप्रतिपत्ति रयुक्ता, यतः

सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः।
प्रत्यात्मनियमाद्भुक्तेरस्ति हेतुरलौकिकः।

परलोक इति शेषः। तत्र परलोके हेतुरस्तीत्यत्र सापेक्षत्वादिति विचित्रो हेतुरस्तीत्यत्र वैचित्र्यादिति अलौकिको हेतुरस्तीत्यत्र विश्वेति, सच फलसमानाधिकरण इत्यत्र प्रत्यात्मेति हेतुर्बोध्यत्वात्। तथा च परलोको हेतुमान् सापेक्षत्वात् घटवदिति, तत्वञ्च कादाचित्कत्वम् किञ्चित्कालावृत्तित्वे सतिसत्वरुपं नातः प्रागभावे व्यभिचारः। उत्पत्तिमत्वमेव हेतुरित्यप्याहुः।

नचात्र साध्याप्रसिद्धिः। दण्डघटयोरनन्यथासिद्धान्वयव्यतिरेकाभ्यां तदवधारणात्। ननु तत्वापत्तिरिति कादाचित्कत्वं वाच्यम्, एवं तत्तद्धेतूनां हेतुपरम्परापि कादाचित्की सहेतुका वाच्येत्यनवस्थेत्पत्राह। अनादित्वादिति बीजाङ्कुरवत्प्रामाणिकं येन न दोषायेति भावः। सर्वत्र पञ्चम्यर्थः- स्वज्ञान प्रयोज्य सिद्धिकत्वम्, अत्र प्रयोज्यता चानादित्वज्ञानस्य विरोधिज्ञाननिरासकतयेति बोध्यम्।

ननु-ब्रह्मैव कारणमस्तु प्रकृति रेववेति, हेतु सामान्य साधनेपि न विचित्र हेतु सिद्धिरत्राह-वैचित्र्यादिति स्वर्गनरककार्यवैचित्र्ये कारणवैचित्र्यस्य तन्त्रत्वात् इतिभावः। नन्वेवमपि अस्तु यागदानादि दृष्टवैचित्र्यं तथा किमदष्टेनेत्यत्राह। विश्वेषां परलोकार्थिनां यागादौ प्रवृत्तितोऽदृष्ट सिद्धिः यागादेः स्वर्गादिफलकत्वज्ञानंविना तस्याऽसम्भवात्। तत्फलकत्वञ्चाशु विनाशिनस्तत्र फल पर्यन्तस्थायि व्यापारनियत मिति भावः।

अथ-अदृष्टं भोक्तृनिष्ठं तदन्यनिष्ठं वेत्यत्राह-प्रत्यात्मेति भुक्त भोग्यस्य सुखादेः प्रतिनियतात्मवृत्तित्वाय भोक्तृनिष्ठमेव तदिति भावः।

तदिदं फलितं सुखादिकं निरपेक्षं चेत्सततमेवस्यान्न स्यादेव-वा नतु कदाचित्स्यादिति। अथ-अकस्मादेव भवतीति चेत् अकस्मादिति किं शब्दस्य हेतु परतया हेत्वभाव उत निषेधार्थकस्य शब्दस्य क्रियासम्बन्धा द्भावनाभावपरम्, किंवा किं शब्दस्य स्वभिन्नपरतयाऽलीक भिन्न परतया वा?

"हेतुभूतिनिशेधो न स्यानुपाख्यविधिर्नच।
स्वभावकल्पना नैवमवधेर्नियतत्वतः"।

अनुपाख्य मलीकं सर्वत्र हेतुरवधेरिति नियतावधिक कार्यदर्शना-दित्यर्थः। स्वनियतावधित्वे निरवधित्वे च कादाचित्कत्वस्वभाव व्याघातः। कादाचित्कत्वे सहेतुकत्वभावश्यकमितिभावः। अथाकाशत्वा-दीनां क्वाचित्कत्ववत्कादाचित्कत्वमपि नसहेतुकत्वसाधकमिति चेन्न। आकाशत्वादीनां सर्वत्रगत्वे आकाशादि स्वभावाभाव प्रसङ्गः।

एतत्स्वभावत्वञ्च-धर्मिग्राहकमानसिद्धमिति हेतुं विनापि देश नियमः तेषाम्। अथैवं-कादाचित्कत्वमपि घटादि स्वभावत्वादेवहेतुं विनापि गगनादिव्यावृत्तमस्तित्वति चेन्न। कादाचित्कत्वस्यावधि नियतत्वात्।

सन्त्ववधयो न तु तेऽपेक्ष्यन्त इति चेन्न। नियतपूर्ववर्त्तित्वस्यैवा पेक्षार्थत्वात्। अन्यथा — गर्दभाद्धूम इत्यपि प्रतीयेत, तन्नियतत्वेपि तद्गतोपकाराजनकस्य कथं तद्धेतुत्वं? न कथमिति ब्रूयाः? उपकारो हि कार्यम्, तद्गतकार्यहेतुत्वं तद्धेतुत्वे तन्त्रम्।

उपकार हेतुत्वायोपकारेष्युपकारान्तरस्वीकारे ऽनवस्थापत्तेः। तर्हि घटादि नियतत्वं कपालादावेव, न तत्वादाविति कुतः— स्वभावादिति

दिक्। अथ-तत्र ग्राहकाभावात्तदसिद्धिः। नच-धूमादौ वह्न्यादेरन्वय व्यतिरेकानुविधायित्वज्ञान सचिवं धूमवह्न्यादि प्रत्यक्षमेव हेतु हेतु मग्राहकं धूममात्रे तत्त्वज्ञानासम्भवात्, यत्किञ्चिद्धमे तु रासभादेरपि तथाज्ञानात्, रासभादेर्व्यभिचारज्ञानान्न तद्ग्रह इति चेत्।

वह्न्यादेरपि व्यभिचारशङ्कासाम्राज्यात्। धूमाद्यर्थिनो वह्न्यादौ प्रवृत्तिहेतुत्व सम्भावनयैवेति परमिति चेन्न। सामान्यव्यभिचारानिर्णया दनुगताया गुणविशेषान्तरानुपस्थितिदशायां यत्किञ्चिद्धूमवह्न्योस्तद्ग्रह सामग्र्या एव वह्निधूममात्रे तद्ग्राहकत्वात्। सति लाघवज्ञाने व्यभिचार शङ्काया अप्रतिबन्धकत्वात्, रासभादौ तु व्यभिचारनिर्णय एव, असति निर्णये तद्ग्राहकेपि भ्रमत्वमेव ग्राह्याभावात्, अनन्यथासिद्धनियतपूर्ववर्त्तित्वं हि हेतुत्वम्। तथा च वह्न्यादे रवधिभूतस्य धूमादिनियत पूर्ववर्त्तित्वात्। अनन्यथासिद्धत्वाच्च हेतुत्वमव्याहतम्।

यागादृष्टादौ स्वर्गादिहेतुत्वसिद्धिस्तुशब्दानुमानादिना तत्प्रामाण्य- स्यापि व्यवस्थापनीयत्वादिति समासः। स्यादेतत्। तथा-प्रागभावावे रुत्तरावधिरेव न पूर्वावधिः अदर्शनात्, तथाक्षित्यादेः प्रागवधिमस्तु तत्कर्त्तु- रदर्शनादिति नेश्वरसिद्धिरिति चेन्न।

तथासति प्रागभाववत् क्षित्यादेरनादित्वापत्तेः। नच-क्षित्यादेरवधेरवध्य स्वीकारेत्वनवस्थेतिवाच्यम् वीजाङ्कुर वदस्या अदोषत्वात्। तदाह।

प्रवाहोऽनादिमानेष न विजात्येकशक्तिमान्।
"तत्वे यत्नवता भाव्यमन्वयव्यतिरेकयोः।"

एषोवध्यवधिमत्प्रवाहो न आदिमान्परन्त्वनादिः। अवधेरवधि स्वीकारात्। अन्यथा वधिधारायाअप्यनवधित्वेनानादित्वे सर्वेषां तत्वापत्तिः। अतएव च प्रतिक्षणं कस्य चिदुत्पत्तिः स्वीक्रियते। अन्यथा विशेषरहित क्षण- द्वयादित्वमेव नस्यादितिभावः।

प्रागभावध्वंसयोस्तु न पूर्वोत्तरावधिकल्पनं प्रतियोग्युन्मज्जनाद्यापत्ते- रितिबोध्यम्। अथ-तथापि यो यदवधिस्तद्व्यक्तिरतद्व्यक्तौ कारणमस्त्वित, नैतावताकर्त्तृ जातीय एव कार्यजातीयकारणत्वसिद्धिः।

किञ्चैवमव्यहितप्राग्वर्त्तिन एव कारणत्वेयागादीनां स्वर्गाद्यहेतुत्वात् अदृष्टासिद्धौ न तदधिष्ठातृसिद्धिः, कार्यस्यनियतजातीयत्वन्तु तज्जातीयानुकूलशक्तिप्रयोज्यमस्त्वित्यत्राह । न विजातीति । विजातीयेष्वेका या शक्तिस्तद्वान्न प्रवाह इत्यर्थः । तथासति धूमादिना दहनाद्यनुमानासम्भवादित्यन्वय व्यतिरेकग्रहप्रकारीभूतधर्माभ्यामेवोत्सर्गतो हेतुहेतुमद्भाव इति भावः । नन्वेवं तृणादीनामपि विजातीयानां नैकशक्तिमत्वेन वह्न्यादि हेतुतास्यादग्राहकत्व इति तृणादिवह्न्याद्यन्वयव्यतिरेकयोस्तत्वे नियतत्वे निर्वाह्ये यत्नवता भाव्यम्, यत्नः कार्यः, कार्यतावच्छेदकजातिः कल्प्येति भावः

अथान्वयव्यतिरेकग्रहाप्रकारजात्याकार्यत्वकल्पने तथाभूतशक्त्या कारणत्वमेव कल्प्यताम् लाघवात्, साचशक्तिः पदार्थान्तरं प्रतिव्यक्ति नानानित्ये नित्यैव सा शक्तिरनित्ये भावहेतुजेति तत्सिद्धान्तात् नित्यैव सा एकेति मतान्तरमिति चेन्न । तृणादेः फूत्कारादिसहकारिनियमानुपपत्तेः, मणिफूत्कारादिनापिवह्न्याद्युत्पत्तिः स्यादिति फूत्कारादिजन्य विजातीय वह्नौ तृणत्वादिना हेतुत्व मावश्यकम् ।

नच तृणफूत्कारादिसंयोगेष्वेव शक्तिरिति न तन्नियमानुपपत्तिः तर्हि तृणादीनामहेतुत्वे कारणत्वेनैव सामयिकशक्तिविशेषः कल्प्यताम् । नवा तदपि तथाभूताभाव विशेषस्यैव तत्वोचित्यादितिदिक् ।

मण्यादिजन्यवह्नेस्तृणादिजन्यवह्नौ वैजात्यमानुभविकम, अतस्तदवच्छिन्ने तृणफूत्कारत्वादिनाहेतुत्वमावश्यकमित्यस्य वह्नित्वावच्छिन्ने विलक्षणोष्णस्पर्शवत्तेज स्तादृक् स्पर्शो वा कारणमिति नव्याः । तेजस्त्वेन तत्र हेतुत्वं द्व्यणुक मेकवह्नौ तृणत्वादिना त्रसरेण्वादिनिष्ठवैजात्यावच्छिन्नं द्व्यणुकादिनिष्ठवह्नित्वेनेत्यन्ये ।

ननु-यथा-एक एवदीप आलोकवर्ति विकारघटादि प्रकाशान् करोति तथैक मेवब्रह्म किंवैक प्रकृति जन्यत्वेन सजातीयं पुरुषभेद भिन्नं बुद्धितत्त्वं कारणमस्त्विति नादृष्टसिद्धयेश्वरसिद्धरत्राह –

"एकस्य न क्रमः क्वापिवैचित्र्यं च समस्यन ।
शक्तिभेदो नचाभिन्नः स्वभावो दुरतिक्रमः ।"

एकस्य कारणस्य नियम्यो न कार्याणां क्रमः, समस्य एकजातीयस्यकारणस्य प्रयोज्यञ्च न कारणानां वैचित्र्यं वैजात्यम् ।

तथा च क्रमिकाणां विजातीयानाञ्चकार्याणां निर्वाहाय तादृश कारणत्वमावश्यकमिति भावः । तथैकस्मादेकजातीयाच्चविभाषादेव ? कार्याणांक्रमो वैजात्यञ्च स्यादत्राहस्वभाव इति यस्य भावावच्छिन्नस्य पूर्वकार्य जनकत्वं तस्यैवोत्तर कार्यजनकत्वे पूर्वोत्तरकार्यकाले उत्तरपूर्वयो रुत्पत्तिस्तयोरैक्य प्रसङ्गश्च, एवमेकस्वभावावच्छिन्नस्यैक जातीयस्य नानाजातिनियामकत्वे सर्वं सर्वजातीय मेकजातीयं वा स्यात । स्वभावस्य दुस्त्यजत्वादिति भावः ।

ननु दण्डादि घटादिहेतुरस्तु, ननु यागादिः स्वर्गादिहेतुरत्राह ।

"विफला विश्ववृत्तिर्नो न दुःखैकफलापि वा ।
दृष्टलाभफलेनापि विप्रलम्भोपि नेदृशः ।"

विश्वेषां प्रेक्षावतां यागादौ प्रवृत्ति नं विफलाप्रेक्षावत्प्रवृत्तित्वात्, नवा दुःखैकफलातत एव ।

नन्वस्तु दृष्टलाभप्रजाख्यातिफलेसत्राह दृष्टेति, लाभादि निरपेक्षैरेव निर्जनारण्ये तदाचरणात् दृष्टेतर फलासत्वे यागादि कर्त्तुर्लाभाद्यसम्भवात्, तदुद्दिश्यैव तेभ्योन्यैर्द्धनादिदानादिति भावः ।

अथ-केनचित्प्रतारकेण स्वर्गादिफलकतया यागादिक प्रख्याप्यानुष्ठाय च वञ्चितोलोकः प्रवर्त्तत इत्यत्राह - विप्रलम्भोपीति । क एवं लोकोत्तरो यः परवन्चन निमित्तं नानाविधक्लेशसाधनैरुपवासादिभिर्यावज्जीवमात्मानमवसादयेदिति ।

तथा च - यागादौ प्रेक्षावत्प्रवृत्तेरेवस्वर्गादिहेतुत्वं सिद्ध्यतीति फलितम् । ननु विनैवादृष्टं स्वर्गादिहेतुरस्तु अत्राह –

"चिरध्वस्तं फलायालं न कर्मातिशयं विना ।
सम्भोगो निर्विशेषाणां न भूतैः संस्कृतैरपि ।"

चिरध्वस्तं यागादिकर्म अतिशयं व्यापारंविना फलाय न समर्थम्. अनुभवादौ चिरध्वस्ते स्मृत्यादिफलसामर्थ्यस्य व्यापारव्याप्यत्वावधारणात् ।

ननु सिद्ध्यनुदृष्टं भोग्यनिष्ठ संस्कृतैरदृष्टरूपसंस्कारवद्भिरपि भूतैर्न निर्वहति । अयं भावः-भोग्य स्रक् चन्दनादिरूपभूतनिष्ठस्यादृष्टस्य व्यधिकरणतया कुत्रचिदात्मनिभोगो नान्यत्रेति नियामकत्वं न सम्भवतीति ।

अथास्तु यागादेः स्वर्गादि प्रतिबन्धकत्वव्यवहार प्रसङ्गः । संसर्गाभावत्वादिनाकारणीभूतस्याभावस्य प्रतियोगित्वेनैव तद्व्यवहारात् । नचैवं प्रायश्चित्तितकीर्त्तितादिकर्मणोऽपि फलापत्तिः, प्रायश्चित्तादिध्वंसारिक्तध्वंसस्यैव व्यापारत्वात् । अस्तु वा प्रायश्चित्ताद्यभाववत्कर्मत्वेन कारणत्वम् ।

इत्थञ्च प्रायश्चित्तादौ प्रवृत्यादिकंसूपपादं - नचैवं दत्तादत्त फलोद्देश्यक प्रायश्चित्ते कृतेदत्त फलादपिफलं न स्यात्, स्याद्वाऽदत्ताफलादपि फलमितिवाच्यम्, तत्तत्प्रायश्चित्त विशिष्टादत्तफलध्वंसातिरिक्तस्यादत्तफलनिष्ठोद्देश्यतया तदभावस्य वा साच्यत्वात् । एतेन प्रायश्चित्तं न नरकादि प्रतिबन्धकम्, आशु विनाशित्वेन तदुत्पत्त्य वारकत्वात् । नापि तद्ध्वंसः प्रायश्चित्तानन्तरकृत गोवधादि नरकानुदयापत्तेः ।

तत्तत्प्रायश्चित्त प्राग्वर्त्ति गोवधविशेषणत्वप्रसिद्धि रित्यपास्तम् । अथ गङ्गास्नानादेः सर्वाङ्गीणानन्तसंयोगादिरूपस्यानन्तध्वंसानां स्वर्गादिहेतुत्वे गौरवाल्लाघवाद्व्यापारत्वेनैकापूर्वसिद्धिरितिचेन्न । तदपूर्वस्य तत्र तावत्संयोगजन्यत्वस्य स्वर्गहेतुत्वस्य च कल्पनमपेक्ष्यतावत्संयोग जन्यत्वेन क्लृप्तध्वंसे स्वर्गहेतुत्व कल्पन एव लाघवात, फलमुखत्वा द्वा गौरवमिदं न दोष इति चेत् न । गङ्गास्नादिकं स्वर्गाजनक जनकमित्याद्यनुमित्याः क्लृप्तध्वंस विषयकत्वाददतिरिक्तत्वासिद्धेः । फलमुखगौरवस्यापि क्वचिद्दोषत्वाच्च ।

नचापूर्वस्यास्वीकारे ध्वंसद्वाराङ्गप्रधानानां स्वर्ग हेतुत्वेऽङ्गप्रधानव्यवस्थानुपपत्तिः। प्रधानकथन्ताप्रवृत्तविधिविधेयत्वादिनाऽङ्गत्वस्य वक्तुं शक्यतेति। स्यादेतत्। मिथ्याज्ञानवासनाया अदृष्टहेतुत्वं सम्भवति-नतु यागादिध्वंसहेतुत्वं भोगहेतुत्वं वा। तत्वज्ञानिनां यागादेरनन्तत्वापत्तेः, भोगानापत्तेश्च। तथा च तत्वज्ञानवतां मुक्तिर्दुर्लभेति चेन्न। तत्र-यागादेः सव्यापारस्य सत्वेपि प्रागभावाभावात्। तत्तुच्छम्।

सातिरिक्तध्वंसस्य व्यापारत्वाद्वास्वर्गाद्यनुपपत्तेः। यद्यप्युत्सर्गतस्तददृष्टजन्यफले तददृष्टप्राग्वर्त्यदृष्टत्वावच्छिन्नाभावः— कारणम्। नच-ध्वंसस्यादृष्टत्वे तत्सम्भवः। तस्यानन्तत्वादिति। तदपि न तददृष्टजन्यान्यफलचरमकारणप्रागभावोपान्त्यफलध्वंसयोरन्यतरत्वेनापि प्रतिबन्धकतायाः सुवचत्वात्। तादृशाभावानन्त्यस्योभयमतेपितुल्यत्वात्। विशेष सामग्री वशादनतिप्रसङ्गे प्रतिबन्धकत्वस्यैवाकल्पनाच्च।

अत्र-ब्रूमः— प्रायश्चित्ताकर्मनाशाजलस्पर्शादिनाश्यतयैवादृष्टसिद्धिः। महापातकादिप्रायश्चित्तादीनामन्ततस्तत्वेनैककालोत्पत्तिकेऽनन्तादृष्टानां ध्वंसे हेतुतौचित्यात् तत्तद्ध्वंसातिरिक्तत्वेन व्यापारविशेषणे तत्तत्प्रायश्चित्ताभावविशिष्टत्वेनकारणत्वे वातिगौरवात्।

किञ्च-तत्वज्ञानिनः सुरापानादिध्वंसवत्वेन पातकित्वे तत्संसर्गेपि तथात्वापत्तिः। किञ्च-गयाश्राद्धादिनापि अपूर्वाजननेतत्र-स्वर्गादिकं दुरुपपादम्। अपि च-तत्तत्क्षणवृत्तिकार्ये तत्तत्पूर्वक्षणस्य विजातीययागादेश्च विजातीय सुखादौ नियामकत्वाद्भुक्ताश्वमेधादिजन्यफलस्यापि तज्जन्य सुखापत्तिः। तत्तत्क्षण एवात्मान्तरे तदुदयात्। तत्तदात्मनो विशिष्यहेतुत्वे गौरवात्।

अथ-मोक्ष्यमाणाश्वमेधादिजन्यफलस्यतदापत्तिवारणायविशिष्य तद्धेतुत्वमावश्यकमिति चेन्न। चरमसर्गीययद्यदृष्टजन्यफलक्षणेनस्वसमानजातीयाभुक्तफलादृष्टसत्वं तत्तददृष्टजन्य विशिष्य तद्धेतुत्वाकल्पनादित्यधिकमस्मत् कृतशब्दालोकरहस्येऽनुसन्धेयम्।

अथ-भोग्यनिष्ठ एवातीन्द्रियादृष्टविशेषस्तत्तत्पुरुषीयभोगे हेतुरस्तु। तत्तत्करतलादि दाह नियामक शक्तिभेद्वत्। अन्यथा - मणिसंयुक्ते करतले दाहापत्तेः। मण्यपसारणेपि तदनापत्तेः। अन्तराऽदृष्टोत्पादकाभावात्। नच मण्यभावः कारणम्। कारणत्वस्य भावत्वव्याप्तत्वात्। किञ्चशक्तिनाशकारित्वान्मण्यादिः प्रतिबन्धक उच्यते इति सास्वीकार्येत्यत्राह—

"भावोयथा तथाभावः कारणंकार्यवन्मतः।
प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः।"

यथा भावो वह्न्यादि र्दाहकरणं तथा मण्यभावोपि। अन्वयव्यतिरेकानुविधानस्य तुल्यत्वात्। कारणत्वस्य भावत्वव्याप्यत्वान्न तथेत्यत्राह। कार्यवदिति यथाभावः कार्यमभावो ध्वंसोपितथेत्यर्थः।

अन्यथा - कार्यत्वमपि भावत्वव्याप्य मित्यभाव,: कार्योपि न स्यादिति· भावः। शक्त्यभावे मण्यादेः प्रतिबन्धकत्वं न स्यादित्यत्राह—प्रतिबन्ध इति विसामग्रीकारणाभावः। प्रकृते मण्यादिः। तथा च तत्प्रयोक्ता पुरुष एव प्रतिबन्धकः। स्वार्थिकप्रत्ययेनतु मण्यादौ तद्व्यवहार इति भावः।

अथ - सत्यपि मणावुत्तेजके दाहाद्उत्तेजकाभावविशिष्ट मण्यभावत्वेन हेतुत्वं तथा च लाघवादकुण्ठित शक्तिमत्वेनैव हेतुत्व मुचितम, साच शक्तिर्नित्या, प्रतिबन्धक मण्यादिना च शक्तेः कुण्ठनान्न दाह इति चेन्न। मण्यादेः कुण्ठनहेतुत्वमुत्तेजकसहकृतस्यतन्नाशकत्वमित्यादि कल्पने गौरवात्।

एतेन प्रथमं वह्न्यादि कारणजन्या वह्न्यादिनिष्ठा शक्ति प्रतिबन्धकेन तस्या विनाशेसत्युत्तेजकेन पुनर्जननम्। नच शक्तिहेत्वननुगमः। शक्त्यनुकूल शक्तिमत्वेनानुगमादित्यपास्तम्।

नाना शक्तितत्कारणत्वाकल्पनात्। उक्ताभावहेतुत्वे लाघवात्। नच तथापितादृशमण्यभाव विशिष्टेन्धनत्वेन हेतुत्वान्नाभावो हेतुः। इन्धनविशिष्ट तादृशाभावत्वेन हेतुत्वादिन्धनमहेतुरित्येव किं न स्यात्।

अतएव दण्डादिविशिष्टचक्रत्वादिहेतुतेति दिक्। ननु व्रीहीन् प्रोक्षति व्रीहीनवहन्तीत्यत्र प्रोक्षणजन्यः कालान्तरभाव्यवघातजनकोऽपि व्यापारो व्रीहिनिष्ठ एवकल्प्यतेऽतएव प्रोक्षिता एव व्रीहयोऽवहन्यन्त इति सिद्धान्तः।

अन्यथा – पुरुषगतादृष्टस्य स्वाश्रयात्मसंयोगेनावघातनियामकत्वे व्रीह्यन्तरेपितत्सत्वादवघातापत्तिः। यो यद्गत फलार्थितया क्रियते स तद्गतफलहेतुकिञ्चिदतिशय जनको यागवदिति नियमाच्च। किञ्च-व्रीह्यादिजनन नियामकोपि व्यापार विशेषः कल्प्यः।

अन्यथा—व्रीह्यद्यवघाते व्रीह्यादीनामापरमाण्वन्तभङ्गे व्रीह्यारम्भक परमाणुभि र्व्रीहय एव जन्यन्त इति नियमो न स्यात्। कदाचित्तैरपि यवारम्भः स्यात्। एवंमाघवर्षणाद्भूमिनिष्ठसम्यक्कृष्यनुकूलाशक्तिर्वाच्या। तथेहापि भोग्यनिष्ठ एवयागादिजन्योतिशयोस्त्वित्य आह—

संस्कारः पुंसएवेष्टः प्रोक्षणाभ्युक्षणादिभिः।

"स्वगुणाः परमाणूनां विशेषाः पाकजादयः।"

प्रोक्षणादिजन्यः संस्कार पुंसएवेष्टः। व्रीहिनिष्ठत्वे, नानात्वापत्तेः।

अथ—नानाव्रीहिनिष्ठ एकएवास्तु। नचैक नाशे तन्नाशापत्तिः। सकल व्रीहिनाशकालीनस्य तस्य सर्व व्रीहिनाशनाश्यत्वादिति, चेन्न। अनन्त व्रीहिनिष्ठत्वादेकात्मनिष्ठत्वे लाघवात्। संस्कृतो व्रीहिरिति प्रतीतिवलाच्च। सम्बन्धविशेषेण तस्य व्रीहिनिष्ठत्वादवघात नियमः। एतेनाभिमन्त्रितपयः पल्लवादौ विषचालनादिशक्तिरित्ययास्तम्। तत्रापि मन्त्रपाठादितः पुरुष एवादृष्ट स्वीकारात्, यो यद्गतफलार्थितयेत्यादिनियमस्तु शत्रुनिष्ट बधार्थितयाक्रियमाणं श्येनादौस्वनिष्ठ पुण्यजनके व्यभिचारीति, शत्रु दुःख जनकं श्येनजन्यादृष्टं शत्रावेवेति चे तत्तथापितादृश नियमोनुकूलतर्काभावादसिद्धि इति दिक्।

अथैवं – श्राद्धादिजन्यादृष्टस्यषट्पुरुषादि निष्ठत्वे गौरवात् कर्तृनिष्ठता स्यात् फलवैयधिकरण्यान्न तथेति चेत्प्रोक्षणादिजन्यमपि व्रीहिनिष्ठं स्यादिति

चेन्न। तत्रानेकपुत्रादिकृतस्थले भोक्तृनिष्ठत्वेपि, लाघवात्, तत्वज्ञानि पुत्रकृतादमुक्तस्य पितुः फलाभाव प्रसङ्गात्। संसारि पुत्रकृतान्मुक्तस्य पितुः फलप्रसङ्गा च्च। तत्तत्पुरुषीय वासनाकालीन श्राद्धत्वादिनातत्तत्पुरुषादृष्ट जनकत्वे त्वतिगौरवात्। किञ्चयागादिजन्यादृष्टस्य धर्मत्वेनैव सुखसामान्ये सामानाधिकरण्यप्रत्यासत्या हेतुत्वात्। सर्वत्र फल सामानाधिकरणमेवापूर्वम्।

अपि च कर्तृनिष्ठत्वे, तत्र व्यधिकरणस्यफलस्यादृष्टजन्येप्यऽदृष्ट नाशकत्वे गौरवमिति दिक्।

व्रीहीन् प्रोक्षतीत्यादौ व्रीह्यादेः कर्मत्वन्तुप्रोक्षणादिजन्य जलसंयोग रुप फलशालित्वेनैवसक्त न प्रोक्षतीत्यादौ लौकिके तथैव वाच्यत्वात्। तत्राधेयशक्तेस्त्वयाप्यनभ्युपगमात। व्रीह्यादिवत्यतिशयाद्यापत्ति वारयति-स्वगुणा इति, परमाणूनां पाकजाः स्वगुणा विशेषाविशेषकाविलक्षण रुप रसादि विशिष्टाः परमाणवः यवाद्युत्पादका इति न दोष इति भावः।

चिकित्सा स्थलेपि धातुसाम्यमेवभेषजपानस्य द्वारमिति बोध्यम्। ननु यत्रपाकज्ञान विशेषास्तत्र जल वाय्वादौ क्वचिदुद्भूत रुपस्पर्शादिकं क्वचि न्नेत्यत्र नियामकाभावात्तदनुकूला शक्तिः स्वीकार्या। किञ्चाकृतप्रतिष्ठे प्रतिमादौ पूजाफलाभावात् प्रतिष्ठादेः क्षणिकत्वात्, तदाहिताशक्ति श्चण्डालादि स्पर्शनाश्या, पूजाफल प्रयोजिका स्वीकार्या।

नच यजमानगतादृष्टं तदाहितम्। तथा चाण्डालादि स्पर्शेन व्यधिकरणेन तन्नाशायोगात्। यजमानस्य तत्तददृष्टक्षये पूज्यत्वानापत्तेश्चेत्यत्राह—

निमित्तभेदसंसर्गादुद्भवानुद्भवादयः ।
देवताः सन्निधानेन प्रत्यभिज्ञानतोपि वा ।

तत्रशक्तिविशेषप्रयोजकादृष्टविशेषादेवोद्भूतानुद्भूत रूपादयः।

अदृष्टे नानाजातीय धर्माधर्मरुपे साङ्कर्येणानुगतविशेधासम्भवात् उद्भूतरुपादिकमेवोद्भूतरुपादौ तन्त्रम् रसनाद्यारम्भकाः परमाणवोयोग्य-जलाद्यारम्भकादिभन्ना इति नातिप्रसङ्ग इति केचित्।

अनुद्भूतत्वानामेव जातित्वात् जन्यानुद्भूतरूपेऽनुद्भूतेतर रुपान्य भावः अवयवि शुक्लादौचावयवशुक्लादिकं हेतुः। इत्थञ्च न परमाणुभेद स्वीकारो नवा भर्जनकपालस्थवह्नावुद्भूततेजः प्रवेशा दुद्भूतरूपानुपपत्ति-रित्यपरे।

शुक्लत्वव्याप्याप्यमेवानुद्भूतत्वं चक्षुरादिरूपेभास्वरत्वादिजातौ मानाभावादित्यन्ये। नीलत्वादिव्यापकमेवोद्भूतत्वमनुद्भूते नीलत्वादौ मानाभावादित्यपरे। एकत्वनिष्ठ मेवो द्भूतत्वं प्रत्यक्षप्रयोजकम्। एवञ्च रूपं समानमेव। इत्थञ्च नानाजातीयरूपावादारब्धरुपावयविनो नीरुप-त्वेपि न क्षतिरित्यप्याहुः।

देवता इति पूजाफलदायिन्य इतिशेषः। सन्निधानेन प्रतिष्ठाविधि कृतेन स्वाभेद स्वीयत्वादिज्ञानतदाहितसंस्कार पेणचाण्डालादि स्पर्शे च तथाज्ञानादि विगमात्फलाभावः। देवताया अचैतन्ये त्वाह—प्रत्यभिज्ञानत इति, इयं प्रतिष्ठितेति यथार्थज्ञानादित्यर्थः।

चाण्डालादिस्पर्शाभावविशिष्टमिदंज्ञानं पूजाफलनियामकं वस्तु तत्र-तज्ज्ञानस्यनियमतः पूजाकाले असत्वेपि फलोदयात्। प्रतिष्ठितं पूजयेदिति विधेस्तत्तत्प्रातिष्ठाध्वंसमात्र क्वचित्तात्त्चाण्डालादि स्पर्शनादिसंसर्गाभाव विशिष्टतत्तत्प्रातिष्ठाध्वंसः प्रतिष्ठाभावासत्वे तु तत्तत्प्रतिष्ठाध्वंसमात्रं क्वचित्तात्तच्चण्डालादि स्पर्शं तद्ध्वंसविरह विशिष्ठं तत्तद्विशिष्ट प्रतिमापूजनं वातथोक्त प्रत्ययादतीतत्वलाभादिति तत्वम्।

यत्तु-प्रतिष्ठाहितं यजमानगतादृष्टमेव, तथा यजमानस्य मुक्तावपि सत्वात्त्। स्वगतभोगजनकादृष्टस्यैव मुक्तिविरोधित्वादिति। तन्न। व्यधिकरणत्वात्, यजमानेतरगतफले तस्या नियामकत्वादिति समासः।

तुलापरीक्षाविधिना तुलादौ शक्तिर्जन्यते तथा नमनोन्नमनादिकमित्यत्राह—

"जयेतरनिमित्तस्य वृत्तिलाभाय केवलम् ।
परीक्ष्यसमवेतस्य परीक्षाविधयोमताः ।"

जयस्तदितरः पराजयः तन्निमित्तस्यादृष्टस्यपरीक्ष्यपुरुषसमवेतस्य वृत्तिलाभाय सहकारिलाभाय परीक्षा विधियो मताः स्वीकृताः। अनेन विधिना तुलामारूढोहं पापवान्निष्पापो वेति ज्ञानं सहकारि। यद्वा - वृत्तिलाभाय जननाय प्राक्तनं पापमपेक्ष्याधर्मस्तदभावमपेक्ष्य धर्मपरीक्षया जन्यते। ताभ्यां जयाजयौ परीक्षाविधौ तादृशफलतयाश्रुतावपि जयाजयरुप फलदर्शनात्तदनुकूलधर्माधिहेतुत्वम् तत्र कल्प्यते, एतेनास्तेयादिना पुण्याजननात्कस्य सहकारि तादृशज्ञानमित्यपास्तम्। देवताचैतन्यमते परीक्षयाकृष्टदेवै नमनादिकं क्रियत इत्यप्याहुः।

अस्माकं शक्तिपदार्थस्तु कारणतैवेतिन पृथक् शक्तिः। सांख्यास्तु नादृष्टमात्मनिष्ठं किन्तु बुद्धिनिष्ठं सुखादिकमपि बुद्धेरेव। तथाहि तन्मते चेतनः पुरुषो न कारणम्। नापि कार्यम्। नवा जन्म धर्माश्रयः। अचेतना प्रकृति स्तु परिणामिनी आदिकारणम्। प्रकृतेश्चपरिणामो बुद्धिस्तदेव महत्तत्वं तस्यधर्मज्ञानाज्ञानैश्वर्यवैराग्या वैराग्यधर्मा धर्मरूपा अष्टौ।

बुद्धि सुखदुःखेच्छाद्वेषप्रयत्नाअपिभावनायास्तैरनङ्गीकारात् अनुभवस्यैव स्मृतिपर्यन्तं सूक्ष्मरूपतयाऽवस्थानात्, महत्तत्वादहंकारो हंकाराद्रूपरस गन्ध स्पर्श शब्दतन्मात्राणि पञ्च एकादशेन्द्रियाणि च पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानि जायन्ते तदुक्तं —

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोड़शकस्तु विकारो न प्रकृति र्न विकृतिः पुरुषः।"

महाभूतान्येकादशेन्द्रियाणि चेति षोड़श तत्राचेतनाया अचेतनप्रकृति कार्याया बुद्धेश्चैतन्याभिमानानुपपत्त्या स्वाभाविकचैतन्य स्वरूपः पुरुषः

सिद्ध्यति चैतन्यस्य तु नित्यस्य स्वाभाविकेष्टानिष्टविभागानुपपत्ति रतीन्द्रियं सिद्धयति ।

इन्द्रियमात्रापेक्षया यदि विषयस्य चैतन्यावच्छेदस्तदापि व्यासङ्गानुपपत्तिरतो मनः सिद्ध्यति यत्सम्बन्धे नेन्द्रियस्य विषयीयचैतन्यावच्छेदनियामकत्वंनापि मनः सम्बन्धेन्द्रियमात्रस्य तत्वम् ।

यतः सुषुप्तावस्थायां व्याघ्रोहं ननरोहमित्यभिमानो नतु नरोह मित्यभिमानः, अस्ति च तत्र नरत्वं सन्निहितम् । इन्द्रिय मनस्सम्बन्धश्चात स्तद्भिन्नोहङ्कारोऽनियतविषयाभिमानव्यापारकः स्वीकार्यः । एवं सुषुप्तावहङ्कार पर्यन्त व्यापारविरतावपि यद्व्यापारोच्छवासप्रश्वासादि, तद्बुद्धितत्वं प्रागुक्तभावाष्टकयोगि स्वीकार्यन्तस्य ज्ञानरूप परिणामेतत् सम्बन्धो विषयः, पुरुषस्य स्वरुप तिरोधायकः ।

एवञ्च बुद्धितत्व नाशादेव विषयावच्छेदाभावात्पुंसो मोक्षः भेदाग्रहाच्च चेतनोहंकरोमीत्यभिमानः । अतएव—

"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविभूढ़ात्मा कर्त्ताहमिति मन्यते ।"

इत्याहुः तत्राह—

"कर्तृधर्मानियन्तारश्चेतनोपि स एव नः ।
अन्यथानपवर्गः स्यादसंसारोथ वा ध्रुवः ।"

कृतिसमानाधिकरण भोगादिनियामका धर्माधर्मादयः कर्त्तुरेव धर्मनियामकस्य नियम्यसामानाधिकरण्यावश्यकत्वात्, सएव कर्त्तैव चेतिताचैतन्याश्रयः, कृतेश्च सामानाधिकरणज्ञानसाध्यत्वात् ।

चेतनोहं करोमीतिबुद्धेरसति बाधके भ्रमत्वायोगात् । अथबुद्धिरचेतना परिणामित्वात्, तन्तुवदितिचेत् बुद्धिर्न कृतिमती ततएव तद्वत्, न

धर्मादिमनो जड़त्वात्, घटवत् इत्यादिकमपिस्यात्, न स्यात्, अनुकूलतर्काभावादिति चेत्तुल्यम्। प्रकृते: क्रियमाणानीत्यादिकं तुल्यपरम्, दोषान्तरमाह।

अन्यथेति, यदि बुद्धिर्नित्या तदा बुद्धिकृतभोगावच्छेदस्य सर्वदात्मनः सत्त्वादनिर्मोक्षः स्यात्। यद्यनित्या तदा जन्येतरस्यानित्यत्वायोगात्, जन्यावाच्या। तथा च तदुत्पत्तेः प्राक् तदाश्रितस्यधर्मादि रप्यभावे बुद्धितत्त्वस्यानुत्पत्त्या नियतशरीरेन्द्रियादेरप्यभावोऽसंसारः स्यादित्यर्थः। तथा चानित्याया बुद्धेरचेतनाया धर्मादित्वमित्ययुक्तम्। अथ भवतु चेतनगतं धर्मादिकं, मनस्तु न विभुर्नित्यो वा किन्तु शरीरमेव गौरोहं जानामीत्यादि प्रतीत्या गौरत्वचैतन्ययोः सामानाधिकरण्य सिद्धेरिति चार्वाक शङ्कायामाह।

"नान्यदृष्टं स्मरत्यन्यो नैकंभूतमपक्रमात्।
वासनासङ्क्रमोनास्ति नच गत्यन्तरं स्थिरे।"

शरीरस्य चैतन्ये वालशरीरेणानुभूतस्य मैत्रेणैव चैतस्य।

अथ, बालयुवशरीरमेकमेवेत्यत्राह। नैकमिति। तद्द्वयं नैकम्-अपक्रमात्। पूर्वशरीरस्य नाशात् परिमाणभेदेन द्रव्यभेदात् पूर्वपरिमाण नाशस्याश्रयनाशहेतुकत्वात्।

ननु कारणेनानुभूतत्वात् कार्येण स्मरणंस्यादित्यत्राह - वासना संक्रम इति, संक्रमे तुमात्रानुभूतस्य गर्भस्थेन स्मरणापत्तेः। ननूपादानवासनाया उपादेये संक्रमः स्यादित्यत्राह - नचगत्यन्तरमिति।

स्थिरपक्षे, पुञ्जात्पुञ्जोत्पत्तेरभावात् करादि शरीरोपादानं वाच्यम्। तथा च विच्छिन्ने करादौ तेनानुभूतस्य स्मरणं न स्यात्। खण्डशरीरे करादेरनुपादानत्वात्। नच करेयदनुभूतं तत्खण्डशरीरोपादानापर किञ्चिदवयवेनाप्यनुभूतमिति तद्गत वासना संक्रमः सम्भवतीति वाच्यम्। यत्रोत्तर शरीरे पाकादिना रुपस्पर्शादि वैलक्षण्यं तत्तद्द्व्यणुकपर्यन्तानां पूर्वेषां नाशात् तत्रापि

परमाणव एव तदनुभव भाजः सन्तीतिपरम्परया तैरारब्धे खण्डशरीरे तद्गत-वासनासङ्क्रम इति चेन्न।

अनुभवादेः परमाण्वादिगतत्वे अतीन्द्रियतापत्तेः। तद्गतरुपादिवत्तैः परमाणुभिरारब्धेन शरीरान्तरेणापि स्मरणापत्तेः। ननु क्षणभङ्गमते पूर्व पूर्व परमाणुपुञ्जोपादेय उतरोत्तर परमाणुपुञ्ज इति स्मरणानुपपत्तिः। स्मृतिकुर्वद्रूप पुञ्जानां स्मृति नियामकत्वात्।

कुर्वद्रूपत्वं फलैककल्प्यं कार्योपधायकत्वज्ञानव्यङ्ग्यमित्यत्राह—

"न वैजात्यं विना तत्स्यान्न तस्मिन्ननुमाभवेत्।
विना तेन न तत् सिद्धिर्नाध्यक्ष निश्चयंविना"।

वैजात्यं कुर्वद्रूपत्वं विना तत्क्षणिकत्वं न स्यात्। कुर्वद्रूपत्वासत्वे हि बीजत्वादिनैव हेतुता वाच्या। तथा च कुसूलस्थ क्षणिकबीजादङ्कुरो जायतसह कार्यन्तराश्रयणे च किं क्षणिकत्व स्वीकारेण। स्थिरस्यापि सहकारिविरहात्कार्याभावोपपत्तेः। तस्मादङ्कुर कुर्वद्रूपत्वं कुसूलस्थ बीजव्यावृत्तंक्षेत्रस्थ बीजवृत्ति स्वीकार्यम्।

अतएव समर्थस्य क्षेपोयोग इति तत्सिद्धान्तः। तस्मिनकुर्वत्वे च सति धूमादिना वह्नेरनुमानन्नभवेत्-उपस्थित वह्नित्वादिकं विहाय वह्न्यादीनां विजातीय वह्नित्वादिना हेतुत्ववत्-विजातीय-धूमत्वादिना धूमादेः कार्यत्व सम्भावनयोपस्थित धूमत्वावच्छेदेन कार्यत्वाग्रहादनुकूलतर्काभावेनव्याप्तेरग्रहात्।

तादात्म्य तदुत्पत्तिभ्यामेव व्याप्तिग्रह इतितत्सिद्धान्तः। तथा चानुमानोच्छेदइतितेनानुमानेन च विना न क्षणिकत्व सिद्धिः- तस्यानुमानैक गम्यत्वात्। नच प्रत्यक्षमेवतत्र मानम् तन्मते निर्विकल्पकस्यैव प्रमात्वेनतस्य च सविकल्पकरुप निश्चयैकगम्यतयातन्निश्चयाभावेऽभावादित्याह। नाध्यक्षमिति।

क्षणिकत्व सविकल्पकस्याप्रामाणिकत्वेनतान्निर्विकल्पकासिद्धेरितिभावः। किञ्च अङ्कुरकुर्वत्वं न जातिः शालित्वादिना साङ्कर्यात्। शालित्वं विना तस्य भावात्तद्विना च शालित्वस्य कुसूलस्थशालौ सत्वात्। कुर्वद्रूप शालौ च तदुभय समावेशादिति।

नच साङ्कर्यं न जातित्वबाधकं तदभावसमानाधिकरण तदव्यापक जातित्वावच्छेदेनैवतदसमानाधिकरणस्य प्रामाणिकत्वात्। अथैवं मृत्सुवर्ण रजत पाषाणादिघटेषु घटत्वमपि जातिर्नस्यात्, मृत् सुवर्णत्वादिना साङ्कर्या-दितिचेन्न। कुलालसुवर्णकारादिजन्यतावच्छेदकतयामृत्सुवर्णादिघटेषु नाना घटत्वस्वीकारात्। नहि सुवर्णघटादौ चक्रादिकं मृद्घटादौ लौहपिण्डादिकं कारणम्, अनुगतधीस्तु अनुगतसंस्थानवत्त्वविषया, घटपदन्तु नानार्थकम्।

अस्तुवा घटत्व दण्डत्वादिकं एकत्ववृत्ति संस्थानवृत्त्येव वा कार्यकारण-तयोरवच्छेदकम्, घटादिपदप्रवृत्तिनिमित्त ञ्च। नच वेमत्वादिना साङ्क-र्यम्, दण्डत्व वेमत्योरभेदात्।

परेतु-मृत्सुवर्णत्वादिकमेवैकत्वादिवृत्तिदण्डत्वघटत्वादिकन्तु सर्वत्रोपष्ट-म्भकपार्थिववृत्तिकार्य कारणभावानां साक्षात्समानाधिकरणेऽवच्छेदकत्वौ-चित्यात्, इत्याहुः।

अथोक्त सम्भावना विरहिण एवास्तु अनुमान मास्त्वेव वा तन्मते सम्भावनाया एव तत्कार्यकारित्वात्। सामग्रीत्वस्य कार्यव्याप्यतावच्छेद-कत्वे गौरवात्। कारणत्वमेव तथेति फलोपधायक दण्डचक्रादि क्षणाना मेकैनकुर्वद्रूपत्वादिनैव घटादि हेतुत्व मस्त्विति चेन्न।

प्रत्यभिज्ञया क्षणिकत्व बाधात्। दण्डत्वादिनाऽनन्यथासिद्ध नियतपूर्व-वर्तित्वस्यसामग्रीत्वेन कार्यत्वव्याप्यत्वस्य च वास्तविकत्वेन गौरवस्यादोषत्वा दिति दिक्। ननु चैतन्यं न भूतधर्म इति न निश्चयः। क्षणिकत्व सन्देह-सत्वात्। नच कोट्यप्रसिद्धया तत्संशयः तथापि स्थैर्यादौ तत्सम्भवा दित्यत्राह—

स्थैर्यं दृष्ट्योर्न नन्देहो न प्रामाण्यविरोधतः ।
"एकता निश्चयोयेन क्षणे तेनस्थिरेमतः" ।

स्थैर्येन सन्देहः प्रत्यभिज्ञया तत्सिद्धेः ।

न प्रत्यभिज्ञा रुप तद्दृष्टौ तदनुव्यवसायेर्नानिश्चयात । नापि प्रामाण्य-मात्रे विरोधात् । तथासति हि सन्देहज्ञान प्रामाण्येपि सन्देहेसन्देहस्या-प्यसिद्धेः । प्रामाण्यस्यक्वाप्यनिश्चयेन कोट्यप्रसिद्धया सन्देहासम्भवाच्च अथ न प्रामाण्य मात्रे, किन्तु प्रत्यभिज्ञा प्रामाण्ये सशयः । संवेयं गुजरी-त्यादौ भ्रमत्वदर्शनात्तत्राह एकतेति ।

येन प्रमाणेन विरुद्धधर्मविरहादिनाक्षणिकस्य घटस्यैकत्रैव क्षणे न नानात्वम् । किन्तु, एकतानिश्चयस्तेनैव प्रमाणेन स्थिरेस्थिरपक्षेपि नानाक्षणवर्त्तिनोपि घटस्यैकतानिश्चयः । एकस्य नानाज्ञानसम्बन्धवन्ना-नाकाल सम्बन्धस्याप्यविरोधादिति सिद्धम् परलोकसाधनम् ।

अथ-तथापि कारणत्वं स्वाभाविकमौपाधिकं वा । आद्ये नीलस्य सर्वा-न्प्रतिनीलत्ववत् कारणत्वस्य सर्वान् प्रत्यविशेषात सर्वं कारणं सर्वस्य स्यात् ।

द्वितीये उपाधेरपि स्वाभाविकत्वे तद्दोषतादवस्थ्यम्, औपाधिकत्वे-त्वनवस्था । किञ्चकारणत्वे स्वाभाविकत्वे उत्पत्तेरारम्भस्य कार्यं कुर्या-दत्राह—

"हेतुशक्ति मनादृत्य नीलाद्यपि न वस्तुसत् ।
तद्युक्तं तत्र तच्छक्तमितिसाधारणं न किम्" ।

हेतुशक्तिकारणत्वमनादृत्य नीलाद्यपि न वस्तुसत् । न पारमार्थिकम् ।

तथा च कथं पारमार्थिक नील वैधर्म्येणकार्यकारणभावेऽपारमार्थिकत्वं साधनीयम् । तद्विना नीलादे रनित्यनासिद्धेः । नित्यस्य तुन प्रमाणगोचरत्वम्,

किञ्चेत्याद्युक्तं दूषयति तद्युक्तं-सहकारियुक्तं तत्तत्कारणं तत्तत्कार्यशक्तमिति नोत्पत्तेरारभ्य तज्जननं कारणत्वस्यसाधारण्ये चेष्टापत्तिमाह इति साधारणं न किं नीलादेः साधारण्यं सर्वैस्तत्त्वेन प्रतीयमानत्वम्।

तच्च प्रकृतेपि सहकारियुक्तं कारणमिति सर्वैः प्रतीयमानत्वादित्यर्थः। नन्वात्मनिष्ठत्वेऽदृष्टस्याहेतुकत्वप्रसङ्गः। तथा हि नात्मातत्समवायिकारणम् नित्यविभोस्तस्य कालतोदेशतश्च व्यतिरेकाभावात्, व्यतिरेकसहकृतान्वय एव कारणताग्राहकः कार्यव्यतिरेकप्रयोजक व्यतिरेक प्रतियोगित्वस्यैव कारणतारुपत्वाच्च समवायिकारणाभावे च गतमसमवायिकारण निमित्तकारणाभ्यां तद्घटितत्वात्तयोरिति।

एवञ्च-अदृष्टनित्यत्वापत्तौ कथंनियतकालीनभोगजनकतेत्यत्राह—

"पूर्वभावोहि हेतुत्वं मीयते येय केनचित्।
व्यापकस्यापि नित्यस्य धर्मधीरन्यथा नहि।'

व्यतिरेकगर्भं न हेतुत्वं किन्त्वनन्यथासिद्धनियतपूर्ववर्त्तित्वं ग्राहकोपि न व्यतिरेकघटित एवेत्याह—मीयत इति।

व्यापकस्यापि नित्यस्य निरुक्तहेतुत्वं येनकेनचिदन्वय व्यतिरेकाभ्यामन्येन च मीयते। अन्यथा—तस्याकारणत्वे धर्मिसिद्धिरेवकुतः सुखादिकं समवायिकारणज तुल्यम्। भावकार्यत्वा दित्यनुमानेनैव तत्सिद्धेः।

नचाकारणत्वे तत्सम्भवतीति धर्मिग्राहकमानमेवैतत्कारणत्वमिति भावः। वस्तुतो घटादिकार्यविशेषे कपालादेरन्वय व्यतिरेकदर्शनाज्जायमानः कार्यकारणभावग्रहोऽसति बाधके समवायेनभावकार्यसमान्येद्रव्यसामान्यस्य तं विषयी करोतीत्यात्महेतुताग्रहः; येन सम्बन्धेन यस्य हेतुता तेन तदभाव एवापेक्षित इति समवाय्यादेस्तादात्म्येन हेतोस्तेनान्याभावः प्रसिद्ध एव। यत्र कपालं तत्र घटवदिति यत्रात्मा तत्र ज्ञानादिवदित्यपि सम्भवतीति दिक्।

एवञ्च – मायाऽविद्यादिपदमदृष्टपरमिति न मायिकं जगदित्यादि श्रुतिविरोधोपीत्याह –

"इत्येषासहकारिशक्तिरसमा मायादुरुन्नीतितौ ।
मूलत्वात्प्रकृतिः प्रबोध भयतोऽविद्येति यस्योदिता ।
देवोसौ विरतप्रपञ्चरचनाकल्लोलकोलहलः ।
साक्षात्साक्षितया मनस्यभिरतिं बध्नातु शान्तोमम ।"

इत्येषाऽदृष्टलक्षणा यस्येशस्य सहकारिरूपा शक्तिः कारणम् असमा अन्यादृशी, अतोमायेत्युदिताऽसमत्वे हेतुदुरुन्नीतित, दुरुन्नेयत्वं मूलत्वात् ।

प्रकृतिः प्रबोध स्तत्वज्ञानं । तद्भयात् - तेन विरोधादविद्येति, उदितेतिसम्बन्धः । असौदेवः विरत प्रपञ्चस्य मिथ्याज्ञानादेः रचनायाः कल्लोलः परम्परा तस्याः कोलाहलः किम्वदन्ती यत्र तादृशः साक्षितया स्वयमेव निर्णायकी भूय मनसिसाक्षादभिरतिं साक्षात्काररूपं बध्नातुजनयतु ।

इति श्रीजयरामेण प्रथमस्तवकाश्रिताः ।
कारिकाः सम्यगाख्याताः सन्तु संख्यावतां मुदे ।"

 

# द्वितीयः स्तवकः

नन्वदृष्टसिद्धावपि नेश्वरसिद्धिः, अचेतनं चेतनाधिष्ठितमेव कार्यंजनक मित्यत्र मानाभावात्। नच परलोकसाधनानुष्ठानकारितया तत्सिद्धिः। वेदादेव स्वर्गसाधनतां यागादौ ज्ञात्वा तदनुष्ठानसम्भवात्।

नचाप्तोक्तत्वं शब्दप्रामाण्ये तन्त्रमिति वेदवक्तुः सिद्धिः। नित्यतया निर्दोषत्वेनैव वेदप्रामाण्यात्। ईश्वरेतरेण केनचित्सर्वज्ञेनोक्तत्वेनापि तत्सम्भवाच्च महाजनपरिग्रहाच्च प्रामाण्यस्य ग्रह इत्यत्राह—

"प्रमायाः परतन्त्रत्वात्सर्गप्रलयसम्भवात्।

तदन्यस्मिन्ननाश्वासान्न विधान्तरसम्भवः।"

परतन्त्रत्वात्, गुणजन्यत्वात।

तथा च शाब्दप्रमाजनकस्य वक्तुर्यथार्थवाक्यार्थज्ञानरूपगुणस्याश्रय तयेश्वरसिद्धः। नच बोद्धुर्योग्यताप्रमैव शाब्दप्रमा प्रयोजिकास्त्विति किमीश्वरेणेतिवाच्यं तस्या एव तत्प्रमात्वेन जन्य तद्विशिष्ट प्रमासामान्ये हेतुता विशेष्यता कार्यकारणयोः सम्बन्धः इत्याद्यप्रमाजनक प्रमाजनक प्रमाश्रयतयेश्वर सिद्धिः। घटत्वादि मद्वृत्ति विशेष्यतया घटादिविशेष्यकत्वे नैव हेतुत्वान्न तदनुरोधेनेश्वर सिद्धिः, संस्कारेण निर्वाहादित्यपि कश्चित्। ननु सवक्तृकेस्तु यथार्थवाक्यार्थ धीर्गुणः अवक्तृके तु वेदे नित्यतया निर्दोषत्वमेव प्रामाण्ये तन्त्रमस्तु। नच तथापि प्रामाण्यग्राहकतया तत्सिद्धिः। महाजन परिग्रहेणैव तद्ग्रहोपपत्ते रित्यत्राह–सर्गेति।

तथा च सर्गादौ वेदस्य महाजनस्यचाभावात् कस्य वा परिग्रहात् तद्ग्रह इति भावः। अत्र प्रवाहो विच्छेदरुपम् नित्यत्वमपि वेदे न सम्भवति, अन्तरा प्रलयेनविच्छेदादितिरहस्यम्।

अथ–प्रमाण्यं स्वत एवगृह्यताम्, तत्र स्वप्रामाण्यं स्वयगृह्यत इति गुरवः। स्वानुव्यसायेनेति मिश्राः। स्वजन्य ज्ञाततालिङ्गकानुमित्येति

भाट्टाः। स्वाश्रय विशेषः प्रामाण्य विषयकोनवेति गुरुमते स्वानुव्यवसाय विशेषः। प्रामाण्यविषयकी नवेति मिश्रमते स्वज्ञान विशेषः। प्रामाण्यानुमिति र्न वेति भट्टमते सर्वत्र निषेधकोटि नैयायिकानां विशेषपदोपादानात् सिद्ध-साधन वाधयो र्निरासः।

नैयायिकसिद्ध प्रामाण्याविषयकस्यपक्षत्वात्, तत्र - तद्वति तत्प्रकारकत्वं प्रामाण्यम् प्रकारत्वादिकं ज्ञानान्नातिरिक्तमिति ज्ञानं रजतत्वादि विशिष्टं व्यवसायेन गृहीतमिति किमपरमवशिष्टं प्रामाण्यग्रह इति गुरुमतन्न युक्तम्। सुखादि प्रत्यक्षे कारणत्वेन क्लृप्तं विषय सन्निकर्षादिकंविना ज्ञानस्य प्रत्यक्षायोगात्। नवा भट्टमतंयुक्तम्। ज्ञाततायानिवारणीयत्वात्। ज्ञानस्यसाक्षात्कारानुभवाच्च

मिश्र मतन्तु सम्भवदुक्तिकमिति चिन्त्यते। ज्ञानस्य-पुरोवर्त्तिविशेष्यकत्वं रजतत्वादि प्रकारकत्वञ्चानुव्यवसाय ग्राह्य मित्यविवाद तथा प्रत्ययात्। तच्च पुरोवर्त्तीदन्त्वेनेव रजतत्वादिनाप्युपनयाद्भासतां बाधकाभावादिति प्रामाण्येनंकिञ्चदवशिष्यते ज्ञातुम्।

यदि च विशेष्यित्वादिकं नानुपस्थितं प्रकारः तदा विशेष्यिता सम्बन्धेन रजतादिमत्वमेव प्रामाण्य मस्तु, एतज्ज्ञानमेव च लाघवात्समर्थप्रवृत्यौपयिकम् अप्रामाण्यन्तु नानुव्यवसायग्राह्यं, रजतत्वाभाववत्वेन - पुरोवर्त्तिनोऽग्रहणेन तथोपनीत भानायोगात्। रजतत्वादिवत्तत्र शुक्त्यादि विशेष्यकत्वञ्च तन्न गृह्यतएवात एवाप्रमापि प्रमेत्येव गृह्यत इति चिन्तामणिग्रन्थः प्रमेति वेति व्यख्यातस्तान्त्रिकैः।

नचेदन्त्वविशिष्टत्वमपि पुरोवर्त्तिनिन भासत इति बाच्यं विशेष्यितायां पुरोवर्त्तिनः स्वरूपतो भानानुपपत्तेः। तादृशविशेषण ज्ञानाभावात्। अन्यथा-प्रमेयत्वादिना रजतादि ज्ञोनपि तथा ज्ञानापत्तेः। तदवच्छिन्न भेदाग्रहस्यापादकस्य सत्वात्। द्रव्यत्वेन पटस्योपस्थितौ द्रव्यत्वादिनापटादेरुपनीतभानाभावेन समानाकारविषय ज्ञानस्योपनीतकत्वाच्च।

वस्तुतो जात्यतिरिक्तस्य किञ्चिद्धर्मप्रकारेणैव भानान्न रजतादेः पुरोवर्त्तिनः स्वरूपतो भानम्, कथमेवं नियम इति चेत्। रजतादि प्रकारकज्ञाने रजतादिविशेष्यकस्यैवहेतुत्वात्। किञ्च प्रामाण्य संशयोत्तरं इदं रजतं नवेत्येव संशयो नतु रजतमिदन्नवेत्यादय इति।

यद्विशेष्यक यत्प्रकारक ज्ञानत्वावच्छेदेन प्रामाण्यसंशय स्तद्धर्मविशिष्टे तत्प्रकारकसंशय इति नियमः स्वीकार्यः। तथाचेदन्त्वेनधर्मिभान मावश्यक मिदंत्वरजतत्वादिनाउपनय सत्वादिति तथाभान दुर्वारं सामग्रीसत्त्वादन्यथेदं ज्ञान मेतद्व्यक्ति विशेष्यक न्नवेति संशयापत्तेश्च।

अत्राहुः विधेयताशालिनः स्वातन्त्र्येण वैशिष्टय भाने अनुव्यवसायसामग्र्या असामर्थ्यङ्कल्प्यते, तद्वद्विशेष्यकत्वोपस्थिते-रुत्तेजकत्वाच्च। न तत्सत्वेऽनुव्यवसायेन प्रामाण्यग्रहः। वस्तु तस्तद्विशेष्यकत्वे सति तत्प्रकारकत्वमात्रं न प्रामाण्यम्, रजत शुक्तयोः शुक्ति रजतइत्यादि ज्ञानसाधारण्यात्। किन्तु तद्विशेष्यकत्वावच्छिन्न तत्प्रकारकत्वं तदग्रहे चानुव्यवसाय सामग्रया असामर्थ्यम्। व्यवसायो वा प्रतिबन्धकः। विशेषणतावच्छेदकीभूत तद्वद्विशेष्यकत्वज्ञानस्यात्र कारणत्वकल्पना द्वा न तदसत्त्वे तद्ग्रहः।

यथा - अभाव लौकिक प्रत्यय स्तद्धर्मस्यावच्छेदकत्व मवगाहमान एव तद्धर्म विशिष्टस्य विशेष्यतादिक मवगाहतेऽत इदन्त्व विशिष्टस्यैव विशेष्यत्व मवगाहते। इदन्त्वस्य विशेष्यता वच्छेदकत्वात्। नतु रजतत्वादि विशिस्टस्य रजतत्वादे रतथात्वात्।

इत्थञ्च - नियमस्तु लौकिक इति नोपनयवशादलौकिक तादृश साक्षात्कारेपि नक्षतिरित्यपि ब्रूमः। परेत्वनुव्यवसायेन प्रामाण्यग्रेहेपि नक्षतिः नच ज्ञानप्रामाण्य संशयानुपपत्तिः, ज्ञानग्रहेप्रामाण्यग्रहा त्तदग्रहेधर्मिज्ञानाभावादिति वाच्यम। दोषात्तत्संशयात् धर्मीन्द्रियसन्निकर्षस्यैव संशयहेतुत्वात्। प्राक् प्रामाण्याभावोपस्थितौ धर्मिज्ञानात्मक एव वा प्रामाण्यसंशय इत्याहुः।

यत्तु - एकसम्बन्धेन तद्वति सम्बन्धान्तरेणतत्प्रकारक ज्ञानव्यावृत्तं तेन-सम्बन्धेन तद्वतितेनसम्बन्धेन तत्प्रकारकत्वमेव प्रामाण्यम् । तच्च दुर्ग्रहमिति, तन्न व्यवसाये येनरजतत्वादिकं प्रकार स्तेन तद्वतोनुव्यवसाये भानात् । संसर्गस्य तत्वेनैव भानात् ।

तत्प्रकारकत्वञ्च तत्सम्बन्धावच्छिन्न प्रकारताकत्वमिति न तज्ज्ञाना सम्भवोपि रजतत्वादि प्रकारकत्वेन समवायाद्यवच्छिन्नमितिज्ञानं रजतमिति ज्ञाने सतिसमवायो नात्रसंसर्ग इति ज्ञानवदप्रयोजकम ।

यदपि - इदंरजतमिति तादात्म्यारोपव्यावृत्तये मुख्यविशेष्यता प्रामाण्ये निवेशनीयेति मुख्यत्वं दुर्ग्रहमिति, तदपि न वस्तुगत्या मुख्यविशेष्यताया एव निवेशात् । तादात्म्यारोपे आरोप्यांशे समवायेन प्रामाण्यसत्वेऽप्यक्षतेः । तादात्म्येन तस्यैवासत्वादितिदिक् ।

ननु कपिलादय एव पूर्वपूर्वसर्गाद्यास्तुयोगज धर्मवशात् साक्षात्कृता खिलार्थ वेदवक्तारो व्यवहारप्रवर्त्तका इत्यत्राह - तदन्यस्मिन्निति । यदि कपिलादयः सर्वज्ञाः विश्वनिर्माणादि समर्थाः प्रतिसर्गं विभिन्नाः स्वीकार्याः । तर्हि-लाघवादेक एव तादृशः स्वीक्रियते स एवेश्वरः ।

अथासर्वज्ञा स्तर्हि नाश्वास इति वैदिकव्यवहारविलोपापत्तिरिति न विधान्तर सम्भवः । न ईश्वरानङ्गीकार इतिभावः । अथ स एवायंगकार इति प्रत्यभिज्ञावलाद्वर्णानां नित्यत्वान्नप्रलयेन विच्छेदः उत्पादकत्वेन भवदभिमतानां निमित्त संयोग विशेषाणां व्यञ्जकत्वाच्च न सर्वत्र सर्ववर्णोपलम्भ इति चेन्न, तत्तद्वर्णानामुत्पन्नो गकारो विनष्टो गकार इत्याद्याकारोत्पाद विनाशादिरुप वैधर्म्यं ज्ञानकालोत्पत्तिकायाः प्रत्यभिज्ञायाः सजातीयाभेदविधेयकत्वात् ।

नच पूर्वापरकालीन व्यक्त्यभेद-विषयक-प्रत्यभिज्ञाकालोत्पत्तिकायाः उत्पादादि प्रतीतेरेव परम्परया वायु संयोगाद्युत्पादादिविषयकत्वमस्तु उत्पत्तेः स्वत्वगर्भत्वादन्योत्पत्तेरन्यत्रारोपायोगात ।

नच श्यामो विनष्टो रक्त उत्पन्न इति ज्ञानकालीन स एवायं घट इति प्रत्यभिज्ञावदत्रापि साम्यादिति वाच्यम्। तत्र - रक्तत्वादि विशिष्टाधिकरण समयध्वंसाधिकरण समयध्वंसानधिकरणसमयध्वंसादिरूप विशिष्टोत्पत्तेः। शुद्धव्यक्त्यभेदाविरोधित्वात्। अपि च - तारोऽन्योमन्दोऽन्य इत्यादिप्रत्ययाद्भिन्नेष्वपि तारमन्द गकारेषु प्रत्यभिज्ञादर्शनात्, तस्याभ्रमत्व मावश्यकम्।

नच तारत्वादिकं वायुधर्म एव, तथासतिकत्वादिकमपि तथास्यादिति शब्दैक्य प्रसङ्गः। एतेन साक्षा दविरोधिन उत्पादादे र्व्यावर्त्तकत्वेन ज्ञातत्वान्नित्येपि स्वघटित सखण्डोत्पादज्ञान सम्भवेपि न व्यक्त्यभेद प्रत्ययविरोधइत्यपास्तम्।

किञ्च चैत्रादेः स्वीय मैत्र शुकादिककारादेः प्रत्यक्षे चैत्रादि कर्णावच्छिन्न विजातीयसंयोगः कारणम् वाच्य मित्यतिगौरवम्, ममतुविजातीय वायुसंयोगोऽवच्छेदकतयैव विजातीयककारादौ हेतु स्तत्तत्कर्णावच्छिजन्न प्रत्यक्षे तत्तत्कर्णोपीति न गौरवमिति चेदस्त्वेवं तथापिकप्रत्यक्षत्वाद्यपेक्षया लाघवात्कत्वादेरेव जन्यतावच्छेदकत्वम।

नच ममापि लौकिक विषयतया कत्वादेरेवं तत्वम्। कोलाहलादौ कत्वादेरग्रहेपि इदन्त्वादिना शब्दत्वादिना च ककारादि प्रत्यक्षात्तात्तत्प्रकारक ककारादि प्रत्यक्षे पृथक् हेतुत्वे गौरवम्। ककारादिनिष्ठ गुणत्वादि खकारादि भेदादि प्रत्यक्षेपि तथात्वेऽतिगौरवम्।

नच तव निमित्तपवनाकाशादेः समवायेन शब्दत्वं जन्यतावच्छेदेकम्, ममतु निमित्त पवन संयोग मात्रस्य तत्तथाकण्ठाद्यभिघातस्य तदुपक्षीणत्वात्तावतैव च कोलाहल प्रत्यक्षं सुघटमिति वाच्यम। तावताकोलाहलप्रत्यक्षो उच्चार्यमाण यद्वर्णमात्रविषयत्वानियमे च तत्कृत कोलाहल तारतम्यप्रत्ययानुत्पत्तेः।

नच स्वाश्रयविषयितया कत्वादिकं तथा अनेकशब्दोत्पत्ति नाशादि कल्पनातो लघुत्वात् शुकादि ककाराद्येव वा विषयितया तथा तदीय श्रावण समवाय तदीय श्रावण विशेषणत्वयो स्तदीयश्रवणसमवेत निष्ठाभाव श्रावणयोः

कारणत्वाञ्च न गुणत्वादि प्रत्यक्षातिप्रसङ्ग इतिवाच्यम्। श्रावणसमवायेन श्रावणत्वस्योपलक्षणत्वेऽप्रसङ्गात्। विशेषणत्वे तु प्राक्केवलशब्दप्रत्यक्षस्वीकारेऽपसिद्धान्तात्।

एवं ध्वनेरपि नित्यत्वापत्तेश्च नचसर्वत्रशब्दे ध्वन्युत्पादविनाशयोरेवारोप्यत्ता न्नैवमितिवर्णोत्पत्तिकाले ध्वन्युत्पत्यनियमात। नच कोलाहलस्थलेतरकत्वाद्यग्रहः कुतः दोषात त्वयापितथैव वाच्यत्वात्। शब्दत्वादिना ककारप्रत्यक्षाय तत्र व्यञ्चक विजातीय पवनसत्वादितिदिक्।

ननु प्रलये मानाभावः। अहोरात्रत्वस्याव्यवहिताहोरात्रपूर्वकत्वनियमात्। कालत्वस्यभोगव्याप्यत्वाच्च कर्मणां विषमविपाकतयासर्वेषां युगपन्निरोधासम्भवात् किञ्च ब्राह्मणजन्यस्यैव ब्राह्मणत्वात्। सर्गाद्युत्पन्नस्यातथाभूतस्यब्राह्मणत्वाभावे आधुनिकानामपि ब्राह्मणत्वाभावापत्तः। प्रयोज्य प्रयोजकबद्धयोरभावे व्यवहाराभावेनसङ्केतग्रहाच्छाब्द व्यवहारानुपपत्तेः। घटादिनिर्माणनैपुण्यस्य पूर्व-पूर्व-दर्शनसापेक्षस्यसर्गादावसम्भवेन घटादि संप्रदायोच्छेदापत्तेश्चेत्यादि बाधकादित्यत्राह—

"वर्षादिवद्भवोपाधि वृत्तिरोधः सुषुप्तिवत्।
उद्भिद्वृश्चिकवद्वर्णा मायावत्समयादयः।"

यथा वर्षादि नत्वेवं व्यवहित वर्षादिवत् पूर्वकत्वे साध्ये राशि विशेषावाच्छिन्न रविपूर्वकत्व मुपाधिस्तथाहोरात्रत्वेना व्यवहिताहोरात्र पूर्वकत्वेसाध्ये अव्यवहित संसारपूर्वकत्वमुपाधिरित्याह—वर्षादिवदिति। भवोपाधि संसारावच्छेदक कालोपाधिरुपाधिः सुषुप्तिकाले कतिपयादृष्ट निरोधवत्कदाचित्समयादृष्टनिरोधोपि - इत्याह—वृत्तिरोध इति।

उद्भिच्छाक भेदः तस्य - यथा तण्डुलकणाच्छाक विशेषाच्चोद्भवः यथा वा वृश्चिकोद्भवस्तथा सर्गादावदृष्ट विशेषात् केवलादिदानीं ब्राह्मणस्योत्पत्तिरित्याह-उद्भिदिति। वैजात्यस्य कार्यतावच्छेदकत्वाच्च न व्यभिचारः। एतत्तत्वम्। ब्राह्मणवादे विवेचितम्। यथा मायावी सूत्र सञ्चाराधिष्ठित

दारुपुत्रकं घटमानयेत्यादि नियोज्य घटानयनं सम्पाद्य बालकस्य व्युत्पत्ती-प्रयोजकः। तथेश्वरोऽपि प्रयोज्य प्रयोजकीभूतं व्यवहारं कृत्वाद्य व्युत्पत्ति कारयति। नचात्र चेष्टया प्रवत्तिस्तया ज्ञानं तद्ध्याने उपस्थित वाक्य हेतुत्वंतज्ज्ञान विषय पदार्थ ज्ञाने चावापोद्वापाभ्यांतत्तत्पदज्ञान हेतुत्व मनुमाय तत्तत्पदे तत्तदर्थं ज्ञानानुकूलत्वेन तत्तदर्थ सम्बन्धवत्वमनुमेयम्।

तथाचायं सम्बन्धग्रहो भ्रमः जनकज्ञानस्य भ्रमत्वं वा स्यादिति वाच्यं तत्वेपि विषयाबाधेन प्रमात्वात् परामर्शस्य प्रमात्वसम्भवाच्च। एवमीश्वर एव कुलालादिशरीर परिगृह्य घटादिसम्प्रदाय प्रवर्त्तकः। अतएव श्रुतिः—नमः कुलालेभ्यः कर्मारेभ्य इत्यादि। तदेवं बाधके निरस्ते साधकमप्याह—

"जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः।
ह्रासदर्शनतोह्रासः सम्प्रदायस्य मीयताम्।"

वेदादि सम्प्रदायोत्यन्तमुच्छिद्यते, ह्रसमानत्वात्। सम्प्रदायवदित्यादिना ह्रासोमीयताम्। अत्र स्वरूपासिद्धि निरासाय जनेरन्यादिपूर्वं मानस्यः प्रजाः ततः पुत्र मात्रार्थिना तत्प्रयुक्त मैथुनजाः ततः कामावर्जितजन्मानः सम्प्रति तु देशकाल विदयानपेक्षावताधर्मभव भूयिष्ठा इति जन्मह्रासः। पूर्वं चरु प्रभृतिषु संस्कारस्ततः षड्ङ्गक इदानीन्तु क्वचिदेका शाखेति विद्यादेरित्यादिनावृत्त धर्मादि संग्रहः। पूर्वमृतवृत्तायो ब्राह्मणा प्रायेतिष्ठन्त ततो मृतवृत्तयः सम्प्रति प्रमृत सत्या नृत कुसीद पाशुपाल्य बृत्तायो भूयांसः। पूर्वन्तपोज्ञान यज्ञदानात्मक चतुष्पाद्धर्मः आसीत्ततः प्रतनीयसितपसित्रिपात्ततोम्लायतिज्ञाने द्विपात् स्रंसति जीर्यति यज्ञे दानेकपात् सोपि पादोदरादिगत् त्रिपादिकादिशतदुस्था श्रद्धा मल कलङ्कितः काम क्रोधादिकन्टक शतजर्जरः प्रत्यह मपचीय मानवीर्य तयेतस्ततः स्खल न्निवोप लक्ष्यते शक्तिः। सामर्थ्य मध्ययन प्रयोजकं तस्य ह्रासः कर्मयागादिस्तस्य ह्रासः। त्रिविधोपि प्राक्तनापेक्षयाष्टकानां स्फुट एव।

अत्र – विद्याह्रासस्वाध्यायह्रासयोः फलत ऐक्येप्यध्यापनशक्तेः

कारणस्य ह्रासा द्विद्याया ह्रासश्च इति सूचयितुं पृथगुपादानम। एवञ्च-ब्रह्माण्डनाशे तदन्तर्गत प्राणिनाश इति प्रलयसिद्धिः। तदुक्तं भगवता—

"सर्वभूतानि कौन्तेय प्रकृतिं यान्तिमामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ।"

इति सर्वाणि भूतानि उत्पत्तिमन्ति नवेभूतानि मूलकारणत्वात् प्रकृतिपर-माण्वाद्यभक्ष्य पेया द्वैतराग जीविका कुतर्काभ्यां आद्यभूताभिसन्धि पाखण्ड संसर्ग प्रतारणादि निबन्धनेतराया यागादौ प्रवृत्ति स्तद्दान महाजन स्तत्परिग्रहा द्वेद प्रामाण्यग्रहः ।

"कारङ्कारमलौकिकादभुतमयं मायावसात्संहरन् ।
हारं हारमपीन्द्रजालमिवभयः कुर्वन् जगत्क्रीड़ति ।
तं देवं निरवग्रहस्फुरदभिध्यानानुभावं भवम् ।
विश्वासैकभुवं शिवं प्रतिनमन् भूयासमन्तेष्वपि ।"

यो जगत्कृत्वा कृत्वा संहरन् हृत्वा हृत्वा च कुर्वन्। अतएव क्रीड़तीव त देवं स्तुत्यं निष्प्रतिबन्धस्फुरदभिमनकार्यम्। अन्तकालेपि प्रतिनमन् भूया-सम।

व्याख्याता जयरामेण स्तवकद्वयकारिका:



नन्वेवमपि तदभावावेदकप्रमाणसद्भावान्नेश्वरसिद्धिः। भूतले घटस्येव ईश्वरस्याप्यनुपलब्धे रभावग्रहेण प्रत्यक्षबाधात्। परमात्मनोऽयोग्यतया योग्यानुपलब्धेरभावान्नाभावग्रह इति चेदयोग्यस्य शशशृङ्गस्याप्यभावो न सिद्धयेत्।

किञ्च कर्तृत्वस्य व्यापकं शरीरित्वंस्वसुखसाधनताज्ञानं च तयोरभावादेव तस्य कर्तृत्वाभावसिद्धिरित्यत्राह—

"योग्यादृष्टिः कुतोऽयोग्ये प्रतिबन्दिः कुतस्तराम्।
क्वायोग्यं बाधतेशृङ्गं क्वार्थिमानमनाश्रयम्।"

अयोग्ये परमात्मनि योग्यानुपलब्धिः कुतः सैव हि बाधिका। नत्वनुपलब्धिमात्रम् आकाशधर्माधर्मादिविलयप्रसङ्गात्। शृङ्गन्तु योग्यमेव बाध्यत इति कुतः प्रतिबन्दिः। अयोग्यन्तु शृङ्गं न बाध्यते, किन्तु साधकाभावात्तदसिद्धिः। ईश्वरो न कर्त्ता शरीरित्वाभावात्, स्वसुखसाधनताज्ञानाभावाद्वा इत्यनुमानञ्च न सम्भवति, आश्रयासिद्धेः। तत्सिद्धौ तु धर्मिग्राहकमानात् कर्तृत्वेनैवसिद्धेर्न बाध इति।

ननु सखे गत्युपनीते ईश्वरे कर्तृत्वाभावः साध्य इत्यत्राह—

"व्यवर्त्याभाववत्तैव भाविकीहि विशेष्यता।
अभावविरहात्मत्वं वस्तुनः प्रतियोगिता।"

व्यावर्त्यः प्रतिक्षेप्तः। कर्तृत्वादिस्तदभाववत्ताविशेष्यता। अर्थाद्धेतोर्हेत्वपर्यवसिता प्रतियोगिता च भाविकी, पारमार्थिकी वस्तुन एव नावस्तुनः सदसतोः संसर्गा योगात्।

तथा च ईश्वरस्यालीकत्वे साध्यवत्वंसाधनवत्वं चानुपपन्नं कर्तृत्वाभावोप्यलीकएव साध्यत इति चेत्। साध्यतां किन्ततः वास्तवस्य कर्तृत्वाभावस्यासिद्धेः। अथनेश्वरेकर्तृत्वाभावः साध्यः किन्त्वीश्वराभाव एवेतिचेत्-

तर्हि-सिद्धमीश्वरेण तदभावाभावस्वरूपस्य प्रतियोगित्वस्य वस्तुन्येव सत्त्वादीश्वरासिद्धावीश्वरप्रतियोगिकाभावासिद्धेः । एतेन सांख्योपनीतेश्वराभाव सिद्धि रित्यपास्तम् । प्रतियोगित्वस्य वस्तुमत्वनियतत्वात् । वस्तुतोसतः ख्यातिर्न्न प्रत्यक्षं सन्निकर्षाभावात् । नानुमानिकं साध्याप्रसिद्ध्यादिना व्याप्त्याग्रहादितिबोध्यम् । योग्यानुपलब्धिविरहान्नासतो भावप्रत्यक्षमित्याह—

"दुष्टोपलम्भसामग्री शशशृङ्गादि योग्यता ।
नतस्यां नोपलम्भोस्ति नास्ति सानुपलम्भने ।"

योग्यानुपलब्धिरेकग्राहिकाऽन्यथातीन्द्रियमात्रोच्छेदापत्तेः । योग्तता च प्रतियोगितद्व्याप्येतरप्रतियोगितावच्छेदकावच्छिन्नोपसामग्री । एवञ्च शशीयत्व विशिष्ट शृङ्गादेर्दुष्टा दोषघटिता योपलम्भसामग्री सायोग्यता तस्यां च सत्यां नोपलम्भउपलम्भाभावः दोषघटितसामग्र्यां शशशृङ्गमस्तीति प्रत्ययात् ।

यदात्वनुपलब्धस्तदा सा योग्यता नास्ति । तथा च योग्यानुपलब्धि विरह एवेति भावः । अथैवं ह्रदादौ वह्न्यादि भ्रामक दोषस्य सत्त्वे नानुपलम्भः । असत्वे तु न योग्यतास्तीति तत्रवह्न्याद्यभाव प्रत्यक्षमपि न स्यात् । दोषे तद्यावदुपलम्भक साहित्यं योग्यतेति चेत् , प्रकृतेपीति ।

मैवम्—प्रतियोग्यंशे भ्रमजनकदोषेतरत्वस्यैव निवेशात् । किञ्च प्रतियोगितावच्छेदकावच्छिन्न ज्ञानमपि न प्रकृते तज्ज्ञाने तु नाभावधीः आहार्यम् तज्ज्ञानमस्तीति चेत् किन्ततः भ्रमाद्वस्तुसिद्धेः शशीयत्वविशिष्ट शृङ्गत्वस्य वस्तुत्वेनतत्त्वनियतावच्छेदकत्वायोगात् । किञ्च लाघवाच्छशीयत्वस्यैवावच्छेदकत्वेनतेन शृङ्गस्य सत एवाभावो वाच्यः, सच व्यधिकरण धर्माबाच्छिन्नाभाव एवेति दीधितिप्रसारिण्यां विस्तरः ।

अथ मदभिन्नाआत्मानः किञ्चिदज्ञाः किञ्चिदकर्त्तार श्चेतनत्वादहमिवेत्यनुमानान्नेश्वरसिद्धिरित्यत्राह—

"इष्टसिद्धिः प्रसिद्धेंशे हेत्वसिद्धिरगोचरे ।
नान्यासामान्यतः सिद्धिर्ज्जातावपि तथैव सा" ।

प्रसिद्धे जीवात्मनि पक्षे इष्टसिद्धिः सिद्धसाधनम् । स्वगोचरेऽज्ञाते ईश्वरे हेत्वसिद्धिर्हेत्वज्ञानम् आत्मत्वेन सामान्यतः सिद्ध पक्ष इति चे दत्रापिजीवस्तद्भिन्नो वा पक्षइति विकल्पे सिद्धसाधनम । हेत्वसिद्धिर्वा, अथात्मत्वं किञ्चिदज्ञवृत्तिजातित्वात्, घटत्ववदित्यनुमानं स्यादत्राह जातावपीति ।

किञ्चिदज्ञत्वेन जीवोक्तौसिद्धसाधनम । तदन्योक्तावप्रसिद्धिरित्याह—तथैवेति । आत्मत्वं न किञ्चिदज्ञ मित्यत्रेष्टसिद्धिश्चेतनत्वादिति हेत्वसिद्धिश्चेत्यर्थ इत्यन्ये । अथागमदिसिद्ध आत्मापक्षइत्यत्राह—

आगमादेः-प्रमाणत्वेबाधनादनिषेधनम् ।
आभासत्वेतु सैवस्यादाश्रयासिद्धिरुद्गता ।

अथास्त्वनुपलब्धिमात्रमेव बाधकम्, अतीन्द्रि त्रोच्छेदस्तु-चार्वाकस्येष्ट एव, नचानुमानादिना तत्सिद्धिःव्याप्तिग्रहासम्भवेनानुमानादे: प्रमाणत्वात्,लोकव्यवहारस्तु सम्भावनामात्रादित्यत्राह—

"दृष्ट्यदिष्टयोर्न्न सन्देहो भावाभावविनिश्चयात् ।
अदृष्टबाधिते हेतौ प्रत्यक्षमपिदुर्लभम्' ।

एवं हेतौ प्रत्यक्षकारेण चक्षुरादौअदृष्टयाऽनुपलब्ध्या बाधितेसति प्रत्यक्षमपि प्रमाणं न स्यात् । अनुपलब्धावपि चक्षुरादेरबाधे व्यभिचारान्नानुपलब्धिरर्थाभावसाधिकेति ।

एवञ्च-गृहान्निर्गतोवराकश्चार्वाको न निवर्तेत, पुत्रादिभिस्तददृष्ट्या तदभावसिद्धेः, प्रत्युत धनाद्यभावावधारणात्सोरस्ताड़नं शोकविकलो वहुविक्रोशेत् परावृत्तापिकुटुम्बं नासादयेत्तदा तेषां सत्वेप्य पलब्धिर्व्यभिचारान्नार्थाभावसाधिका ।

नच तदैवान्ये क्षणिकास्तेप्युत्पन्नास्तदा पुत्रोत्पादहेतूनामनुपलम्भे नाभावनिश्चयात्। अथ-गृहान्निर्गतस्य चार्वाकस्य गृहंमसन्निकृष्टमिति न तत्र तदभावग्रहः सन्निकृष्टे चाधिकरणेऽत्यन्ताभावग्रहेपि ध्वंसग्रहान्न शोक-इति चेत्तर्हि-परात्मन्ययोग्येऽदृष्टादीनामसन्नि-कृष्टेच देशदेवतादीनामभावः सिद्धि यतोतिचार्वाकमतं विहतम्। अधिकरणज्ञानमात्रात्तथेतिचेत् प्रकृतेप्य-धिकरणस्मृतिसत्वात्तदापत्तिरिति तस्माद्योग्यानुपलब्धिरेव बाधिकेतिनेश्वर-रादिबाधः :

मीमांसकस्तु तोषयितव्यो भीषयितव्यश्च योग्यानुपलब्धेरेव बाधकत्वे-ऽयोग्योपाधिशङ्कया क्वापि व्याप्त्यनिश्चयात्कथमनुमानेनेश्वरसिद्धिरिति, सेय-मुभयतः पाशारज्जुरित्यत्राह—

"शङ्काचेदनुमास्त्येव तचेच्छङ्का ततस्तराम्।
व्याधातावधिराशङ्का तर्कःशङ्कावधिर्मतः"

सन्निकृष्टे धूमादौ व्यभिचाराभावनिश्चयाद्विप्रकृष्ट धूमादौ व्यभिचार सशयोवाच्यः। विप्रकृष्ट धूमादिज्ञान मनुभानादेवेति सिद्धमनुभानं शङ्कांनचे-त्तातः शङ्का विरहेव्याप्तिनिश्चयोत्तरंसुतरां अनुमानन्न सन्निकृष्ट धूमेतसद्धूम-त्वादिनाऽव्यभिचार निर्णयेपि धूमत्वादिना तत्संशयः स्यादेवेत्यत्राह— तर्क इति। धूमोयदिवह्निव्यभिचारीस्याद्वह्निजन्यो न स्यादिति तर्क एव व्यभि-चार शङ्कानिवर्त्तक इत्यर्थः।

अथावह्नेरेवभविष्यतीत्यादि शङ्कातर्कविरोधिनीस्यात्तर्कान्तरा तन्निवृत्तौ चानवस्थेत्यत्राह— व्याधातेति।

क्लुप्तहेतुं विना कार्योत्पत्तिशङ्कायां धूमाद्यर्थं वह्न्यादौ प्रवृत्त्यादयो व्याहन्येरन् तस्मादन्वयव्यतिरेकादिसहकृतप्रत्यक्षात्कार्यत्वग्रहोस्तीति तवापि निरपवादस्तर्क इतिभावः।

अयं धूमो यदि वह्निसमवहितजन्योन स्यात, वह्निसमवहिताजन्यत्वे-सति जन्योन स्यादिति तर्क्केण वह्निसमवहितजन्यत्वसिद्धिः, व्यावर्त्तकधर्मज्ञा-नतया व्यभिचारशङ्काविरोधिनी अत्रापाद्यवङ्काऽवह्नेरेव भविष्यतीत्या-दिकान्वयव्यतिरेकानुविधायित्वज्ञाननिवर्त्या नचैतज्ज्ञानं व्यभिचारशङ्कानि-वर्त्तकमप्यस्तु

धूमत्वावच्छेदेन एतज्ज्ञानाभावेन तदवच्छेदेन व्यभिचारज्ञाननिवृत्त्ययो-गात्। उक्त तर्कात् लाघवज्ञानसहकृतविपर्ययानुमानाद्धूमत्वावच्छेदेन वह्निसमवहितजन्यत्वसिद्धिकाद्युपस्थितिविरहादपि, क्वचिद्व्यभिचारशङ्का-विरहान्नानवस्थेत्यप्याहुः।

वस्तुतो लाघवज्ञानकालीन व्यभिचारसंशयस्याप्रतिबन्धकत्वात्तत्तद्धूमे व्यभिचाराभाव निश्चयो जायमानो धूमत्वावच्छेदेनैवजायते अतएव-तर्क्का-नवतार एव शङ्कितोपाधिरप्रयोजक इत्युच्यते ऽतएव पक्षेतरत्वाद्युपाधिप्रयुक्ता पक्षीय व्यभिचारशङ्काप्रतिबन्धिका। नचानुमानमात्रोच्छेदस्तर्क्कावतारे तत्साम्राज्यात् तदेतदाह।

"यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते।
विपक्षे च कुतस्तावद्धेतोर्गमनिकारणम्।"

विपक्षस्य विपक्षे हेतोरव्यतिरेकित्वं सत्वं यावच्छंक्यते तावद्धेतो र्न गमकत्वमित्यर्थः। व्यभिचारशङ्का चोपाधिशङ्काधीना-तदुक्तम्।

"अन्ये-परप्रयुक्तानां व्याप्तीनामुपजीवकाः।
तैर्दृष्टेरपि नैवेष्टा व्यापकांशावधारणा।"

इति, अन्ये केचन हेतवः परप्रयुक्तानां व्याप्तीनामुपजीवकाः उपाध्यव-च्छिन्न हेतुनिष्ठतया ज्ञायतेऽतएवोपसमीप वर्त्तिनि स्वसमानाधिकरणे स्वधर्म-व्याप्तिमादधातिचाप्रमाती त्युपाधिशब्दो जवाकुसुमादिसाधारणः तैश्च सोपा-धिभिर्दृष्टैरपिव्यापकांशस्यावधारणानि तु या नेष्यते साधारणत्वेनज्ञानस्य-हेतोर्दर्शनेन साध्यसंशयादिति भावः।

उपमानन्तुनेश्वरे बाधकं तद्विषयस्यानतिरेकात्। प्रत्यक्षादिनैव स्वग्रहणेन तस्याप्रमाणत्वात्। इति वैशेषिकादयः। तथाहि—

"तद्विषयत्व सादृश्यं न पदार्थान्तरंमतः।
परस्परविरोधेहि न प्रकारान्तरस्थितिः
नैकतापि विरुद्धानामुक्तिमात्रविरोधतः।'

परस्पर विरोधे भावत्वाभावत्वादीनां परस्परामावनियतत्वे प्रकारान्तरस्थिति भावस्वभावेऽभावत्वात् अभाव स्वभावे भावत्वात्। भावाभावात्मकस्यादित्यत्राह –

'विरुद्धाना मेकतापि न उक्तिमात्रविरोधता।"

उक्ति मात्रेणापि विरोधात्। अयंभावः। सादृश्यंभावो वा अभावो वा उभयथाऽतिरिक्ताभावात्। तत्राभावत्वे-सप्तम पदार्थत्वं भावत्वे गुणवत्वे-द्रव्यत्वं निर्गुणत्वे सामान्यवत्वे -गुण कर्मान्यतरत्वं, निःसामान्यत्वे वा समवेतत्वेत्वमनेकाश्रितत्वे सामान्यत्वं एकाश्रितत्वे विशेषत्वमिति।

एतेन शक्ति संख्यादयोपिव्याख्याताः। नन्वेवं निर्गुणत्वे गुणकर्मान्यतरत्वमित्युक्तवत्सामान्यादयोपि निषेधे तुल्यं, सादृश्येपि सादृश्यं हि न द्रव्य गुणः कर्म वा गुणवृत्तित्वात् न समान्यंसप्रतियोगिकत्वात्, उत्कर्षवत्वात्। कस्यचित्सादृश्यस्यैक त्वात्र वृत्तित्वात्। सामान्यादिवृत्तित्वाच्च। नाभावः सप्रतियोगिकत्वेनाप्रत्ययात्। उत्कटत्वादिना प्रत्यया च्चेतिचेन्न। तदन्यत्वेसति तद्वृत्तिधर्मवत्वादेरेव सादृश्यत्वात्। अतिरिक्ते सादृश्ये मानाभावात्। त्वया तद्वयञ्जकत्वेनाभिमतस्योक्तधर्मस्यैवतत्वौचित्याच्च सादृश्यं स्वघटकभेदप्रतियोगिज्ञान सहकृतेन्द्रियग्राह्यम् एतेनेन्द्रिय सन्निकर्षमात्रात्तद्ग्रहेण लिङ्गाद्यप्रतिसन्धानेपि च तद्ग्रहेण तस्यानतिरिक्तत्वेपिग्राहकान्तर मावश्यक मित्यपास्तम्।

ननु - तथापि गवये गोप्रतियोगिकसादृश्यज्ञानकरणकं गवि गवय

प्रतियोगिकसादृश्यज्ञानमुपमानजन्यं नह्येतत्प्रत्यक्षविशेष्यस्य गोरसन्निकर्षात्, नापि स्मृतिरननुभूत विषयकत्वादित्यत्राह—

"साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते ।

अर्थापत्तिरसौ व्यक्तमितिसाधारणं न किम् ।"

तज्ज्ञानमर्थापत्तिजन्यमेव, अन्यथा गवयोगोविधर्मेतिज्ञाने गोर्गो विधर्मेति ज्ञ नजनकमपि मानान्तरं स्यात् ।

यदि च गवये गोप्रतियोगिकवैधर्म्यज्ञाने गवि गवयनिष्ठ वैधर्म्यप्रतियोगि-कत्वेन ज्ञातेन गवि गवय प्रतियोगिक वैधर्म्यमनुमीयते तदा तुल्यम् । प्रकृतेपि-गवयनिष्ठ सादृश्य प्रतियोगित्वेन गवय प्रतियोगिक सादृश्यानुमानादिति वैशेषिकादिभिरुपमाने खण्डिते नैयायिक आह—

"सम्बन्धस्यपरिच्छेदः संज्ञायाः संज्ञिनासह ।

प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः" ।

गवयादि संज्ञायाः संज्ञिना गवयत्वादिविशिष्टेन सह सम्बन्धस्य शक्तेः परि-च्छेदो निश्चयः उपमानान्तरस्य फलमुपमितिः इन्द्रियशब्दलिङ्गं साध्य त्वात् ।

ननु-गोसदृशो गवय इत्यतिदेश वाक्यादेव गोसादृश्यविशिष्टे शक्तिज्ञानं-गोसदृशो गवयपदवाच्यः असतिवृत्यन्तरेशिष्टैस्तत्र प्रयुज्यमानत्वात् । गवि गोशब्दवदित्यनुमानाद्वेत्यत्राह—

"सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः ।

समयो दुर्ग्रहः पूर्वं शब्देनानुमयापि वा" ।

गोसादृश्यं न गवयपदशक्यतावच्छेदकंगुरुत्वात् । तदज्ञानेपि व्यवहारादिना

गवयत्वविशिष्टे शक्तिग्रहेण प्रयोगाच्च। किन्तु गवयत्वं जातिरेव तस्य च प्रागप्रतीतेर्न शब्दादनुमानाद्वा तद्रूपेण शक्ति ग्रहः।

ननु-गवयत्वप्रत्यक्षानन्तरंगोसदृशोगवयइतिवाक्यं लक्षणयागवयत्व विशिष्टे शक्तिधीरस्त्वित्यत्राह –

''श्रुतान्वयादनाकाक्षं न वाक्यं ह्यन्यदिच्छति।

पदार्थान्वयवैधुर्य्योत्तदाक्षिप्तेन सङ्गतिः'।

श्रुतस्य मुख्यार्थस्यान्वयबोधाद्गोसादृश्य सामानाधिकरण्येन गवयपदवाच्यत्व बोधजननात। जनितान्वयबोधतयाऽनाकांक्षं वाक्यं न अन्यत्लक्षणीयं बोधयितु मीष्टे।

यत्र हि पदार्थस्य मुख्यार्थस्यान्वयानुपपत्ति स्तत्रैव मुख्यार्थ स्मारितेनलक्षणीयेन सङ्गतिः बोधकत्वरुपः सम्बन्धः। यथा– गङ्गायांघोष इत्यादौ। ननु गवयपदं सप्रवृत्तिविमित्तम् पदत्वादितिसामान्यतोदृष्ट मितरबाधाल्लाघवाच्च गवयत्व प्रवृत्ति निमित्तकत्व बोधकत्वमस्तु।

अस्तुवा गवयत्व प्रवृत्ति निमित्तकं तदितराप्रवृत्तिनिमित्तकत्वेसति प्रवृत्तिनिमित्तकत्वादिति व्यतिरेक्येवतर्थेति चेन्न। अनुमितेर्व्यापकतावच्छेदकातिरिक्ताप्रकारत्वात्। द्वितीये-साध्याप्रसिद्धिः। वस्तुत स्तादृशव्याप्याद्य प्रतिसन्धाने जायनानाया उपमिनोमि नानुमिनोमीत्यादिविलक्षणानुभव सिद्धाया विलक्षण प्रतीतेर्नानुमितित्वमिति, तत्करणमपि मानान्तरं शक्तिमात्र परिच्छेदकतया नेश्वरेबाधकमिति निर्णयः। अत्र-सादृश्या द विशिष्टपिण्डदर्शनं करणमुद्बोधकोभूतं तज्जन्यातिदेशवाक्यपर्यन्तं स्मृतिर्व्यापार इति मिश्राः। एतन्नयेतिदेश वाक्यपार्थस्मृत्यव्यवहितोत्तरसादृश्यविशिष्ट पिण्डदर्शनेउपमितिर्न भवत्येवेति ध्येयम्।

नव्यास्तु-अतिदेशवाक्यार्थ धीःकरणं तदर्थस्मृतिर्व्यापारः सदृश पिण्डदर्शनं सहकारीत्य हुः। एतन्नयेप्यतिदेश वाक्यार्थानुभवानन्तरमेव सदृश

पिण्डदर्शने उपमितिर्न स्यादिति चिन्त्यम्। वाक्यज्ञानं करणं वाक्यार्थादिकं व्यापारइति तु चित्रलेखादिस्थले अभिप्रायिकशब्दकल्पनात्।

अन्यथा-निश्चयत्वप्रवेशे गौरवादितिवाच्यम्, तदर्थज्ञानत्वेन हेतुत्वेऽपि व्यापारभूत तन्निश्चयादेः कार्यसम्भवात्। उपमित्यव्यवहित प्राक्काले सर्वत्र शाब्दबोधाभावाच्च। तस्मात्सादृश्यज्ञानं करणं तद्विशिष्टदर्शनम् व्यापारः। अतिदेश वाक्यार्थनिश्चयः सहकारीति तत्वम्।

अथ-धिक्करभ मतिदीर्घग्रीवं कठोरकण्टकाशिनमपसदंपशूना मित्यादि वाक्यार्थज्ञानादनन्तर मतिदीर्घग्रीवत्वादिरुपवत्पिण्डदर्शनेन करभपदवाच्यत्वोपमितेरत्र पश्वन्तर वैधर्म्यज्ञान मप्युपमितिहेतुरितिपश्वन्तर वैधर्म्यज्ञान मप्युपमिति हेतुरितिसाधर्म्य वैधर्म्य- ज्ञानयोरुपमिति हेतुत्वेव्यभिचारइति चेन्न। इदंत्वावच्छिन्ने गवयपदवाच्यत्वोपमितौ तत्र गवयपदवाच्यत्व धर्मितावच्छेदक प्रकारकज्ञानत्वेन हेतुत्वात्।

अस्तुवा तत्तज्ज्ञानाव्यवहितोत्तरोपमितौ तत्तज्ज्ञानानां हेतुत्व मित्यन्यत्र विस्तरः। शब्दोपि न बाधकः अनुमानानतिरेकादिति वशेषिकादयः। अस्त्वनुमान विषयैवबाधक इति चेन्न। अनुमानस्य बाधकताया निराकृतत्वात्। अनुमान शरीरञ्च पदश्रवणोत्तरं पदार्थस्मरण एतेपदार्था स्तात्पर्यविषय मिथः संसर्गवन्तः आकांक्षादिमत्पदस्मारितत्वात्।

दण्डन गामम्याजेति पदस्मारितपदार्थवत्। किंवा-एतानि पदानि तात्पर्यविषय पदार्थ संसर्गप्रमापूर्वकाणि, आकांक्षादिमत्पदत्वादित्यनुमानात्, ज्ञानावच्छेदकतयासंसर्गसिद्धिरित्यत्राह---

'अनैकान्तः परिच्छेदे सम्भवे च न निश्चयः।

आकांक्षा सत्तयाहेतु र्योग्यासत्तिरबन्धना'।

परिच्छेदे नियमेमिथः संसृष्टाएवेति साध्येमिथः संसर्गवत्वे साध्ये इति फलितम्। अनाप्तोक्त पदस्मारिते स्थूलपरं पयसासिञ्चतीत्यादौ अनैकान्तात्

अन्वय प्रयोजकरुप वत्वस्यैव योग्यत्वात्। आप्तोक्तत्वेन विशेषणीयोहेतु रितिचेत्, प्रकृतवाक्यार्थं यथार्थज्ञानवत्वस्य दुर्ग्रहत्वात्।

सम्भवे सम्भावितसंसर्गवत्वे संसर्गयोग्यत्वे साध्यइति फलितं न निश्चयः। संसर्गयोग्यत्वस्य साध्यस्य सिद्धावपि न प्रकृतसंसर्गवत्वनिश्चयः। अथैकपदार्थेऽपरपदार्थसंसर्गवत्वरुपायोग्यता हेतुप्रविष्टेति चेन्न। तद्घटितहेतो र्निश्चये हेत्वनिश्चयादिति भावात। संसर्गप्रमापूर्वकत्वे तु साध्ये उक्तयोग्यताया हेतुनिवेशेपि सिद्धसाधनमिति तत्साधारणं दूषणमाह--आकाङ्क्षेति।

समभिव्याहृतपदस्मारित पदार्थपदार्थजिज्ञासाकांक्षाघटकमित्युक्तं पश्यानयवेतिजिज्ञासोदयात्। साच शक्तया स्वरुपसत्येव शाब्दप्रमा हेतुरिति लिङ्ग विशेषणम्। कुतः ज्ञातस्यैव तत्वसम्भ ात्।

ननु-योग्यता सहितासत्तिरेव हेतुरस्तु तत्राह- योग्येति। अवन्धना व्याप्तिशून्या अयमेति राज्ञः पुत्रः पुरुषोपसार्यताम इत्यत्र राज्ञः पुरुष इति भागे तात्पर्य विषयसंसर्ग प्रमापूर्वकत्वाभावेन व्यभिचारात्। अथ तात्पर्यरुपाकांक्षा हेतुप्रविष्टेति न व्यभिचारः।

नच-कर्मत्वादौ घटादि संसर्ग सिद्धावपि, कर्मत्वादौ निरुपितत्वसम्बन्धेन घटादि प्रकारक बोधोनजात इतिवाच्यम्, कर्मत्वादिकंघटादिमत्, घटाकांक्षादिमत्पदस्मारितत्वादित्यनुमानस्यापि सम्भवात्। नच. शाब्दबोधः कर्मत्वादि विशेष्यक एव व्युत्पत्तिवलात्।

अनुमितिस्तु घटादिविशेष्यका कर्मत्वादि विशेषणिकाप्यस्त्विवतिवाच्यम्। शाब्दात्मक विलक्षणानुमितौ व्युत्पत्तेरुपितन्त्रत्वात। एतेन प्रत्यक्षादिना सिद्धावपिविनेच्छां शाब्दबोधान्नेयमनुमितिरित्यपास्तम्।

पक्षताया लिङ्गभेद भिन्नत्वेन तत्तल्लिङ्गकानुमितौ तदहेतुत्व सम्भवादिति चेदत्राहुः। नानुमितं न साक्षात्कृतं किन्तु आप्तमुखाच्छ्रुत मित्यायामव साधारण प्रतीतेः। शाब्दप्रमितावनुमितित्वाभावसिद्धिः।

किञ्च शृणोमि, शाब्दयामीत्याद्युल्लेखप्रयोजकानुभव सिद्धायाः शाब्दत्व-जातेरावश्यकत्वे तद्वत्यनुमितित्व कल्पनं व्याप्तिस्मृत्यादिकल्पनं च गौरव-प्रमानाभावाच्चासिद्धम्। अतएव शाब्दबोधाव्यवहित पूर्वक्षणः परामर्श तदभावान्यतरत्वान्, क्षणत्वादित्याद्यनुमितिरन्यत्र क्लृप्ताभावविषयणीति न्यायः।

नच-शाब्दानुमितिसामग्रीसमाहारेयुगपदुभयोत्पत्तिवारणाय तयैक साम्ग्र्याअपरत्र प्रतिबन्धकत्व कल्पने गौरवम्। समानविषयक शाब्दानुमिति सामग्र्याः सत्वेन्यायनये शाब्दबुद्धे रेवोत्पत्तेः। अनुमानातिरिक्त मानाभावस्य पक्षतात्वात्।

नच-तादृशसाधकमानस्य प्रत्यक्षशाब्दादिसामग्रो भेदेन नानात्वात्। शाब्दादि सामग्र्यां विशिष्य प्रतिबन्धकत्वे लाघवम्! अनुमित्यन्य सिद्धि विशिष्टत्वेनैव प्रतिबन्धक त्वात्। किञ्च-तथापि शाब्दत्व विरुद्धमनुमिति-त्वात्मकं वाच्यम। अन्यथेच्छा घटितानुमिति सामग्र्या अनुमित्यन्य ज्ञान-त्वावच्छिन्नविरोधित्वे वह्नेरशाब्दानुमिते र्घटस्य शाब्दानुमित्योश्च सामग्र्याः समाहारे वह्निघटयोरशाब्दशाब्दानुमित्यापत्ति।

शाब्दान्यानुमित्यन्यज्ञानत्वावच्छिन्नं प्रति शाब्दान्यार्थमिति सामग्री-त्वेन बिरोधित्वेतु गौरवम् अपि च इच्छादि घटितशाब्दादि सामग्र्याः शाब्दान्यज्ञान विरोधित्वेपि, वह्न्यादेः शाब्दोत्पत्तिकाले द्रव्यत्वव्याप्य पृथि-वीत्वादिनिश्चयाद्द्रव्यत्वादेरशाब्दानुमित्यापत्तिः। आकांक्षाद्यघटित लिङ्ग परामर्शस्य शाब्दत्व व्यापकानुमितित्वावच्छिन्नहेतुत्वात्।

अथ-सानुमिति द्विधा शाब्दाशाब्द भेदात्! तत्राद्ये-आकांक्षादिघटित लिङ्गज्ञानम्, अन्त्येशाब्द सामग्र्यभावो हेतुरिति विशेष सामग्र्यभावादनति-प्रसङ्ग इति चेदस्त्वेवं तथापिव्यापकानुमितित्वे मानाभाव स्तत्प्रकारकेच्छादे रुत्तेजकत्वे गौरवम्।

पक्षता परामर्शादेः शाब्दत्वविरुद्धानुमितित्वावच्छिन्ने एव हेतुताया न्या-

प्यत्वाच्च। किञ्च-वह्निव्याप्य सामान्यमात्र विशिष्टविशेष्यको वह्निशाब्दबोधो न स्यात्। तद्विशिष्टे वह्निव्याप्यवत्ताज्ञानस्यासम्भवादिति शब्दः पृथक् प्रमाणम् अपिच घटात्पृथगित्यादावेकदेशान्वय स्वीकारे शाब्द समानाकारानुमितिदुर्घटा।

पृथक्त्वं पक्षीकृत्यानुमितौ तद्वतोऽमानापत्तेः। यद्वतः पक्षत्वं तत्रैव पञ्चम्यर्थभानापत्तेः। यत्तु-शाब्दानुमित्योर्विलक्षणत्वे शाब्दानुमित्यन्यतरत्वस्य कल्पने गौरवमिति। तन्न। ऐकजात्येपि शाब्दान्यानुमिते र्भेदकल्पने गौरवात्। शाब्दान्यशाब्दानुमित्यन्यतर भेदस्तवाप्यावश्यक इति चेत्, शाब्दानुमित्यन्यतरत्वमपितथा शाब्दशाब्देतरानुमित्यन्यतरत्वस्यैकजात्ये आवश्यकत्वा दित्यधिक शब्दालोक प्रकाशेऽनुसन्धेयम।

प्राभाकरास्तु लोकवेदसाधारणव्युत्पत्तिवलादन्विताभिधानं प्रसाध्य वेदस्यापौरुषेयतया वक्तृज्ञानानुमानानवकाशात्। ससर्गे शब्दस्येव स्वातन्त्र्येण प्रामाण्य मास्थीयते। लोकेत्वयं वक्ता स्वप्रयुक्त यथार्थज्ञानवान्भ्रमाद्यजन्य वाक्यार्थज्ञानजन्य वाक्य प्रयोक्तृत्वादित्यनुमानात्, वक्तृज्ञानोपसर्जनतयाउत्तरकाल वा एतेपदार्थाः संसृष्टाः वक्तृयथार्थज्ञान विषयत्वादित्यनुमानात्।

साक्षाद्वाक्यार्थसिद्धेऽन्विताभिधानवलादायातेपि प्रतिपादकत्वेऽर्थवाचकतामात्रं वाक्यस्येति निर्णीतवन्तः, तदतिस्थवीयः निर्णीत शक्तेर्वाक्यार्द्धि प्रागेवार्थस्य निर्णयेव्याप्तिस्मृति विलम्बेपि लिङ्गस्यैवानुवादिता। वेदस्थले निर्णीत शाब्दधीसामर्थ्यादाकांक्षादिज्ञान सचिव शब्दाल्लोकस्थले प्रागर्थनिश्चयेनुमानस्यैवार्थ ग्राहकत्व लिङ्गस्य पूर्णत्वेपिव्याप्तिस्मृतिविलम्वेनानुमानस्य शब्दापेक्ष याविलम्बितत्वात्।

अथाप्तोक्तत्व निश्चयो लोकस्थले तन्त्रमित्यावश्यकं तदनुमानत एवार्थ सिद्धे र्लौकिकस्यानुवादकतेति चेत्, कुतस्तन्वं नहि तन्निश्चयः। शाब्दबोधसामान्ये हेतु स्तवमते पदजन्य शाब्दबोधे व्यभिचारात।

नापि लौकिक शब्दजन्ये वेदानुकारेण पठयमानमन्वादिवाक्ये वेदत्व भ्रमाद्वेदानभिज्ञगौड़मीमांसकस्य तादृशवाक्यजन्य शाब्दबोधेव्यभिचारात्। नचायंबोधोभ्रमो विषयाबाधात्। स्यादेदत्। नाप्तोक्तत्वनिश्चयः शाब्दबोधहेतुत्वानन्भ्रम।

किन्तु-आप्तोक्तत्वशङ्कायाः शाब्दबोधसामान्यविरोधिन्या व्युदासाय। वेदेतुनित्यतया निर्द्दोषत्वेनैव तच्छङ्काव्युदासइतिचेन्न। आप्तोक्तत्वस्य दुर्ग्रहत्वादनाप्योक्तत्वशङ्कायांग्राह्य संशय पर्यवसितायां विरोधित्वेमानाभावात्।

यदिच – तत्तच्छङ्काव्युदासायवेदस्थलेपि निर्द्दोषत्वज्ञानमावश्यकम् तदा-वेदस्याप्यनुवादकतापत्तेरित्याह।

"व्यस्तपुंदूषणाशङ्कैः स्मारितत्वात्पदैरमी।
अन्बिता इति निर्णीते वेदस्यापि न तत्कुतः"।

अमी वैदिका अर्थाः अन्विताःमिथः संसृष्टाः व्यस्त पुंदूषणाशङ्कैः पदैः स्मारितत्वादित्यनुमानात्, संसर्ग निर्णीते तत् अनुवादकत्वंवेदस्यापि न कुतः। तथाचगतं लौकिकशब्दस्यानुवादकत्वेनापि अनुमानेनैवार्थसिद्धे वेदस्याप्रमाणत्वे सामग्र्यन्तराकल्पनात्।

तस्मान्नाप्तोक्तत्व शङ्काव्युदासेप्यङ्गम्। अयोग्ये शाब्दबोधाभावस्तु-वाधकमानाभावरूपयोग्यत्वाभावादितिभावः। अन्वितेशक्तिरिति तु न युक्तम्। अन्वयस्यापि प्रकारतापत्तेः आद्यव्युत्पत्ति विरोधइतिचेत्तर्हि-इतरपदार्थान्वित एव शक्तिरुचिता। पदान्तरत्नभ्मत्वा तत्त्यागइतिचेत्।

आकांक्षा योग्यता सन्निधिलभ्यत्वेनान्वयोपि त्यज्यतां त्वयाप्यन्वयविशेषलाभाय आकांक्षादेरादर्त्तव्यत्वादितिदिक्। सत्वपद न करणं किन्तु पदार्थएवावश्यकत्वादतएव पदार्थकरणक ज्ञानात्कविकाव्यादिकमेतेन पदानामेव करणत्वं पदजन्योपस्थितिंविना पदार्थान्वया बोधात्। तदुक्तम् –

"प्राथम्यादभिधातृत्वात्तात्पर्योपगमादपि।
पदानामेव साशक्तिर्वरमभ्युपगम्यताम्"।

अभिधातृत्वात्-पदार्थोपस्थापकत्वादिति गुरुमतमपास्तम्। पदमन्तरेणाप्युपस्थितपदार्थानां संसर्गबोधादावश्यकपदार्थोपस्थित्या पदस्यान्यथासिद्धेः। क्वाचित्कपदज्ञानञ्च पदार्थोपस्थित्यक्षीणम्, अन्यथा-गुरुमतविदामेषश्लोकः-पदानामित्यर्थानामिति। पदप्रयोक्तुराप्तस्यैव तयात्वौचित्यात् इति तन्न।

पदार्थानामतीतानागतत्वेन पदार्थस्मरणस्यापि निर्व्यापारत्वेन करणत्वासम्भवात्। किञ्च-निराकांक्षवाक्योपस्थापित पदार्थानामन्वयबोधात्साकांक्ष पदजन्य पदार्थोपस्थितित्वेन पदार्थोपस्थापकसाकांक्ष पदत्वेनापिविनिगमकाभावेन हेतुत्वयुक्तञ्चैतत्। आद्यव्युत्पत्तिस्थले, बालेनोपस्थितप्रयोज्यवृद्धवाक्ये करणत्वं गृहीत्वा तद्व्यापारत्वेनैव पदार्थोपस्थिते हेतुत्वकल्पना व्यापारेण व्यापारिणो नान्यथासिद्धिः।

पदादमुमर्थं जानीयामिति प्रत्ययाच्च, तस्मात्पदज्ञानमेव करणं पदार्थस्मृतिर्व्यापारः। कविकाव्यमूलीभूतञ्चज्ञानम्मानसमेवेतिदिक्। अथा व्युत्पन्नस्य कथन्न शाब्दबोधइति चेत्। व्युत्पत्तेरपि सहकारित्वात्। व्युत्पत्तिश्चघटादिपदं घटत्वादिविशिष्टशक्तयादिमदित्यादिबुद्धिः। नचावश्यकत्वान्नागृहीतेतिन्यायाच्च, घटत्वादावेव शक्ति रस्त्विति चेत् न। तर्हिघटत्वत्वादेःशक्यतावच्छेदकत्वे गौरवात्। तादात्म्येन घटत्वं तथेतिचेत्, तत्प्रकारकोपस्थित्यादिः स्यात, निरवच्छिन्नैव घटत्वादौशक्ति र्घटादिपदस्य, अतएव घटत्वादिशब्दान्नान्यथाबोध इत्यपिन घटत्वत्वादिविशिष्टोपस्थित्यनापत्तेः।

घटपदं शक्तिसम्बन्धेनघटत्ववदितिशक्तिज्ञानं घटत्वांशे निरवच्छिन्न प्रकारताकंघटत्वविशिष्टशाब्दबोधेहेतु स्तथैव हेतु हेतुमद्भावादितिचेत्, साध्वी राजाज्ञा यत्सम्बन्धिज्ञानम्बिनोपस्थितिर्विना चोपस्थितिं शाब्दबोधइत्यधिकं शब्दालोक प्रकाशेअनुसन्धेयम्।

नन्वेवमस्तु शब्दएवबाधकः सर्वज्ञेजगत्कर्त्तरि, तथाहि—

"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते"।

इतिपठन्ति। प्रकृते-र्बुद्धितत्वस्य, गुणैः— सत्वादिभिः क्रियमाणानि-कर्माणि, अविवेकादहं कर्त्तेति चेतनोमन्यते, तेन न पारमार्थिकंचेतनस्य कर्त्तृत्वम्, किन्त्वाभिमानिकम् नच सर्वज्ञस्याभिमानोपि विशेषदर्शनादित्यत्राह —

"न प्रमाणमनाप्तोक्ति र्नादृष्टेक्वचिदाप्तता।
अदृश्यदृष्टौ सर्वज्ञे नच नित्यागमः क्षमः"।

यदिहि सर्वज्ञसर्वकर्त्रभावावेदक शब्दो नाप्तोक्तो न तर्हि बाधकोऽप्रमाणत्वात। अथाप्तोक्तस्तर्हि नाज्ञातमाप्तोवक्तीति तदर्थज्ञानं तस्यातीन्द्रियाद्यर्थविषयक मिन्द्रिय लिङ्गाद्यतिवर्त्तित्वान्नित्यं ततस्सर्व विषयकमपिजन्यस्यैव हेतु परतन्त्रतया नियत विषयकत्वात्।

कथं वा न कर्त्ता तदागमस्यैव प्रतीयमानत्वात्। अथ नित्य निर्दोषतयैव शब्दः प्रमाणंनत्वाप्तोक्तत्वादित्यत्राह — नचेति, प्रलयादिसाधनान्नित्यागमो न सम्भवतीत्यर्थः।

ननु निस्सङ्ग बोधकागमानां का गतिरित्यत्राह—

"नचासौक्वचिदेकान्तस्सत्वस्यापि प्रवेदनात्।
निरञ्जनावबोधार्थोनचसन्नपि तत्परः"।

असावागमो संगपक्षीय एवेति न अहं सर्वस्य प्रभवोमत्तस्सर्वं प्रवर्त्तते। इत्यादे विश्वत श्चक्षुरुत विश्वतो मुखो विश्वतोवाजएतु विश्वतस्सम्पात्। सम्बाहुभ्यान्धमति संपतत्रै र्द्यावा भूमीजनयन् देवएक इत्यागमानां सत्वात्।

अथ-बाधकागमानां कागतिरित्यत्राह— निरञ्जनावबोधेति। निरञ्जनावबोधार्थश्चागमः-सन्नपि तत्परो न कर्तृत्वाद्यभावपरो न अञ्जनन्धर्मधर्माधर्मो तद्राहित्य परत्वात्।

"नच मान्तानि कर्माणि निवन्धन्ति धनञ्जय"

इत्यादि एकवाक्यपरत्वान्निबन्धन्ति - धर्माधर्मभागिनं कुर्वन्ति, कर्मपदमेव वा अदृष्टपरम्। अञ्जनकर्तृत्वादि तद्‌राहित्येन ध्येयमित्यर्थमित्यप्याहुः।

साधकश्रुतीनान्तु कार्यकारणभावादिवत्तर्कमूलकानुमानसाचिव्येन न मुख्यार्थत्वमितिभावः। अस्त्वर्थापत्तिरेवबाधिका, यद्यसावभविष्यन्नोपादेक्ष्यतएह्यसावनुपदिश्य प्रवर्त्तयितुं न जानाति, सर्वज्ञत्वात्। ततउपदेशएवान्यथानुपपद्यमान स्तथाविधस्याभावमौदासीन्यम्वावेदयतीत्यत्राह—

"हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा।
तदभावात्प्रवृत्तिर्नो कर्मवादेप्ययम्विधिः ॥"

हेतोरभावेवश्यं फलाभाव इति सामान्यव्याप्तेः प्रमाणेप्रमाहेतावसति प्रमापि न स्यात्, प्रमायाअभावे च प्रवृत्तिरपि न स्यात्, इष्टसाधनतादिप्रमायाः प्रवृत्तिहेतुत्वात्, तत्प्रमाकरणं चयजेतेत्यादिविधिरेवेति नोपदेशोव्यर्थः।

अथ - दारुपुरुषादि प्रवृत्तिवद्विना व्युपदेशं प्रवृत्तिः स्यादिति चेन्न। दृष्टान्तासिद्धेः, नह्यचेतनस्यप्रवृत्तिसम्भवः। एतेन भूतावेशवदेवप्रवृत्तिरित्यपास्तम्। तत्रापि भूतात्मन्येव चैत्रादि शरीरावच्छेदेनप्रवृत्तिर्न तु चैत्रादेरात्मनि तथा च तदात्मन्यदृष्टादिकं कथं स्यात्।

फलकामस्यैवाधिकारितयाकामनाभावेनापि फलासम्भवात। अनन्तशरीरेषु भूतावेशन्यायेन प्रवर्त्तकत्वमपेक्ष्योपदेशेन तत्वेलाघवाच्च, एतेनघटादि सम्प्रदायवदेवयागादिकमस्त्वित्यपास्तम्।

यागादौ दृष्टफलादर्शनेन तत्फलकथनावश्यकत्वाच्चेतिदिक्। कर्मणएवजगदिति मतेपि तुल्यमिदमित्याह—कर्मवादेपीति, प्रवर्त्तकस्यादृष्टस्य सत्वेपिकिमुपदेशेन। दृश्यादेरप्रवृत्तिसम्भवादसत्वेपिकिमुपदेशेन, अदृष्टाभावे उपदेशसहस्रेणाप्यप्रवृत्तेरितिभावः।

किञ्च-यद्यसावभविष्यदित्याद्यर्थापत्तिरनुमानमेव तच्च न सम्भवतिपक्षासिद्धेः, अर्थापत्तिर्मानान्तरमेवस्यादत्राह—

"अनियम्यस्यनायुक्तिर्नानियन्तोपपादकः ।
न मानयोर्विरोधोस्ति प्रसिद्धे रप्यसौसमः ॥"

अनियम्यस्याव्याप्यस्य नायुक्तिर्नायोगोनान्यथानुपपत्तिः तदव्याप्यस्य तं विनानुपपत्तिर्न्नेतिफलितम। अनियन्ताऽव्यापकोनोपपादकः व्यापकव्यतिरेकेणैव-व्याप्यव्यतिरेकावगमात्।

तथा च जीवित्वेसति गृहासत्वं वहिस्सत्वं विनानुपपन्नमित्युपपत्तिज्ञानादर्थापत्तिर्वाच्या। वहिस्सत्वम्विनानुपपन्नत्वंञ्चवहिस्सत्वाभावव्यापकाभावप्रतियोगित्वंव्यतिरेकव्याप्तिरेवेति-देवदत्तो वहिस्सन्-जीवित्वेसति गृहासत्वात्। गृहवर्तिवदितिव्यतिरेकयस्तु-वहिर्वत्तिमद्वदि । दृष्टान्तेनकदाचिदन्वय्यपिसम्भवति।

अथ गृहे सन्निकृष्टेजीविदेवदत्ताभावश्चक्षुषा गृहीतो देवदत्तोवहिस्सत्वकल्पको न चेदमनुमानं वैयधिकरण्यादिति चेन्न। तुल्यवित्तवद्यतया तदुत्तर मनसा वाग्रहीतेन गृहनिष्ठाभावप्रतियोगित्वेन देवदत्तनिष्ठेनानुमानाद्वैयधिकरण्येतरानुपपत्तिधियोप्यसम्भवात्।

उपरि सविताभूमेरालोकवत्वादित्यादावदिभूमिस्सनिहितसवितृकेति साध्यम्। अथास्त्वन्वयव्याप्तिज्ञान जन्यानुमितिर्व्यतिरेक व्याप्तिज्ञानजन्यार्थापत्तिरन्यथापरस्परव्यभिचारेण हेतुत्वस्याप्यसम्भवादितिचेत् न। पृथग्वैजात्य कल्पने मानाभावात्प्रमाणद्वयसमाहारे परस्परविरोधित्वकल्पनगौरवाच्च।

तत्तत्परामर्शाव्यवहितोत्तरानुमितित्वस्य कार्यतावच्छेदकत्वाच्च न व्यभिचारः। व्यतिरेकिपरामर्षाद्वह्न्यभावत्वादिनाऽन्वयिनस्तु वह्नित्वादिनाऽनुमितिः। नच धूमाभावव्याप्य वह्न्यभाववान् ह्रदः धूमव्यापकवह्न्यभाववान् ह्रद इत्यनयोः कार्यविशेषः, प्रथमाद्विशिष्टस्यवैशिष्ट्यमितिन्यायेनद्वितीयाद्विशेष्येविशेषणमितिन्यायेनानुमितेः कथमर्थानिर्णय इति चेत्। आद्यादाद्यन्यायेन द्वितीयाद्वितीयन्यायेनैव नियमतस्सम्भवादित्यप्याहुः। यदि च व्यतिरेक-

व्याप्तिज्ञान जन्यज्ञानस्या नानुमिनोमितिन्त्वर्थापयामीत्यनुव्यवसायः प्रामाणिकः तदा-पार्थक्यमेवेति ध्येयम् ।

यदपि जीवीक्वचिदस्ति इत्यस्यक्वचित्वेन गृहस्यापि विषयत्वात्तदुत्तरवर्त्ति-गेहे नास्तीति ज्ञानेन तस्यविरोधज्ञानकरणजाक्वचिदित्यत्र गेहान्यविषयकत्वा-र्थापत्तिरविरोधापादिका जायते, नचेहानुमानसम्भवइत्यत्राह नमानयोरिति । तयोर्ज्ञानयोर्न्न विरोधोस्ति एककालीनत्वात् । किन्तु क्वचिदितिज्ञानं यदि गेहविषयकंस्यात् गेहेनास्तीतिज्ञानविरुद्धंस्यादिति विरोधापादन तच्चानुमाना-त्थापकत्वमेव, क्वचिदिति न गेहविषयकं गेहेनास्तीत्यविरुद्धत्वादित्याद्यनुमाना-दितिभावः ।

परेतु-मानयोनविरोधोस्ति, तथात्वेह्येकस्य बाध एवस्यान्न विषयभेदेनोप-पत्तिर्विरोधित्वेन, ज्ञानन्तु गृहान्यविषयत्वस्योपपादकं, नतु गृहविषयस्येत्यत्र किम्बीजंगृहसत्वगृहासत्वयोर्विरोधज्ञानस्याभङ्ग एवेतिचेत्, सविरोधोगृहासत्वव-हिस्सत्वयोर्व्याप्तिद्योतकएवेत्यनुमानतएव वहिस्सत्वसिद्धि रित्यर्थइत्याहुः ।

अर्थापत्तिश्चेत्स्वीक्रियते तर्हि गतमनुमानेनेत्याह-प्रसिद्धेवेति । धूमोव-ह्निविनानुपपद्यमान एव वह्निं गमयेत्, किम्वाधूमाद्यथा वह्निस्सेत्स्यति नथाशि-खरेऽनुपलब्धेर्वह्न्यभावोपीत्यनुमानानुपपलब्धेर्विरोधज्ञानमेव नितम्वे वह्नि-साधयेदितिभावः ।

अनुपलब्धिस्तु न बाधिकेति, योग्यादृष्टेरित्यादिना प्रागुक्तम्, अधुना सा प्रत्यक्षान्नातिरिक्तेत्याह—

प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात् ।
अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः ॥"

अभावप्रतिपत्ते र्भावप्रतिपत्तेरिवानुव्यवसायसिद्ध चाक्षुषादिरुपत्वादन्यथासिद्ध चक्षुरादिव्यापारानुविधायित्वात, तन्मतेपि सर्वत्रानुपलब्धि र्न ज्ञातकरणम्, अनुपलब्धिज्ञानेपि तदनुपलब्धिज्ञानस्य तत्राप्येतदनुपलब्धिज्ञानस्य हेतुत्वे चा नवस्थानात् ।

किन्तु स्वरूपमतीत्यज्ञातकरणकज्ञानत्वाद्बहिर्विषयकालौकिकेतरज्ञानत्वेन-भावभूतकरणसचिवमनोजन्यत्वाच्च, चक्षुरादिकरणकत्वमेवेत्यर्थः। अत्र-घटाभावधीश्चक्षुष्करणिका चाक्षुषप्रतीतित्वादित्यादिकमनुमानं नात्र इन्द्रिय-करणकत्वे साध्येमनसासिद्धसाधनमर्थान्तरं वा।

ननु-चाक्षुषादि प्रतीतिर्मन एवेतिनापारोक्ष्यसिद्धिः। इन्द्रिय व्यापारा-नुविधानं चाधिकरणग्रहोपक्षीणम्। अज्ञातकरणकत्वञ्च सर्वथासिद्धम्। तन्मते क्वचिदपिज्ञाताया एवानुपलब्धेःकरणत्वात्। ज्ञातकरणकत्वेपि प्रत्यक्षत्वे प्रमाणान्तरोच्छेदप्रसङ्गात्।

कुत्रज्ञाताकरणमितिचेत्। यत्र-गृहान्निर्गतश्चैत्रः केनापि तत्र-मैत्र आसीदितिपृष्टःक्षणंध्यात्वावदति नासीत्तत्र मैत्र इति, तत्र-प्राङ्नास्तिताबुद्धौ नहीयं स्मृतिः। गृहसन्निकर्षकाले मत्रास्मरेणन तदभावानुभावात्। नापि प्रत्यक्षं गृहासन्निकर्षेजायमानत्वादिति ज्ञातंव तदातनयोग्यानुपलब्धिस्तत्रकर-णम्। भावभूतकरणत्वाद्यनुमानम्वाप्रयोजकमितिचेत्, मैवम्। चाक्षुषादि-बुद्धिर्न भ्रमो बाधकस्य निरस्तत्वादधिकरणज्ञानस्यहेतुत्वे, त्वगिन्द्रियोपनीते घटादौ नीलाद्यभावग्रहः स्यात्।

नच-प्रतियोगिग्राहकेन्द्रियजन्याधिकरणज्ञानं तथेति वाच्यम, त्वगिन्द्रियो-पनीते वायौ रूपाभावप्रतीत्यनुदय प्रसङ्गात्। नच रूपानुपलम्भे नानुमीयते, नोरूपोवायुरित्तिवाच्यम, हेतोरपि दुर्ग्रहत्वात्। उपलम्भस्य तवातीन्द्रियतया तदभावस्य ज्ञातानुपलब्धिगम्यतया तस्याअपि ज्ञातानुपलब्धिगम्यत्वेनवस्था-नात्।

नच प्राकट्याभावेनानुमेयः प्राकट्याभावस्यापिरुपाभावतुल्यत्वात् नापि व्यवहाराभावेन कायवाग्व्यवहाराभावाभावेप्युपेक्षाज्ञानसत्वात्, मनोजन्य-ज्ञानसत्वात्, प्राकट्याभावेनमनोग्राह्योन त्वन्मते उपलम्भाभावे नानमेयइति चेत्, भवेदेवं यदि वायौ रूपाभावं पश्यामिनत्वनुमिनोमीति न धीः। किञ्च-चक्षुषाऽभावग्रहे आलोकोहेतुर्नतुत्वयेति कुतस्तवानुपलम्भेविशेष्यते-प्राङ्ना-स्तिता धीस्तु ज्ञाताया अनुपलब्धेः करणत्वेनावस्थानात् स्मरणाहस्मरणान्-

मिति सन्निकर्षकालीनानुपलब्धि लिङ्गकेति अधिकम्मतमनुपलब्धिवादे ।

साधकतान्तरमाह–

"प्रतियोगिनिसामर्थ्याद्व्यापाराद्व्यवधानतः ।
अक्षाश्रयत्वाद्दोषाणामिन्द्रियादिविकल्पनात् ।"

इन्द्रियाणीतिपक्षः करणत्वं साध्यम्, हेतुः प्रतियोगिनीत्यादि यद्यत्प्रतियोगिग्राहकं यथानुमानादिकं भवति चेन्द्रियमपि प्रतियोगिग्राहकं स्वतस्तदभावग्राहकमितिभावः ।

नच-वाच्यताग्राहकोपमानेव्यभिचारः । वाच्यतातिरिक्तत्वेन प्रतियोगिविशेषणात् । ननुप्रतियोगिग्राहकत्वमतन्त्रम् अनन्यथासिद्धत्वस्योपाधित्वादिन्द्रियं वाश्रयग्रहेणान्यथासिद्धमतआह – व्यापारेति । व्यापारेणाधिकरणप्रत्यक्षणेन्द्रियत्वान्यथासिद्धभावग्रहेपि संयोगादिनान्यथा सिद्ध्यापत्तेः ।

किञ्चाभावभ्रमे दुष्टकरणजन्यत्वम्वावश्यकं, दुष्टञ्च पित्तादिनेन्द्रियमेव नत्वनुपलब्धिरित्याह – अक्षेति । तथ चेन्द्रियमभावप्रमाकरणमभवभ्रमकरणत्वादनुमानादवत् दोषस्याकरणत्वान्नव्यभिचारः । ननुअदृष्टत्व दोष सहित्यं तच्चानुपलब्धावपिसम्भवत्यतआह– विकल्पनादिति । अधिकरणविशिष्टाभावधीर्नेन्द्रियजा अभावधीत्वात् ।

ननूपलब्धिकरणिकाभावधीत्वान्नोभयकरणिका प्रमाणयोर्विरोधात् । अविरोधेसाङ्कर्यादिति, इन्द्रियमेव विशिष्टग्राहित्वीकार्यमितिभावः ।

नच घ्राणोपनीत सौरभेण चन्दनस्येवानुपलब्धिगृहीतेनाभावेन भूतलस्यापिचक्षुषैवग्रहः, विशेषणभूताभावग्राहकतयानुपलब्धेः स्वीकारादितिवाच्यम् । तथापि प्रतियोगिविशिष्टाभावस्यानुपलब्ध्यासम्भवात् । उपनयस्य प्रत्यक्ष एव कारणत्वकल्पनादितिभावः ।

अथाभावस्येन्द्रियजन्य सविकल्पकविषयत्वेनिर्विकल्पकविषयत्वापत्तिरप्यनुपलब्धिविषयएव सः अभावेनेन्द्रिय प्रत्यासत्तेरभावाच्चेत्यत्राह–

"अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनात् ।
प्राप्त्यन्तरेनवस्थानान्नचेदन्योपि दुर्घटः ॥"

इन्द्रियजन्यसविकल्पकविषयत्वं न निर्विकल्पकविषयत्वव्याप्यं ब्राह्मणत्वादौ व्यभिचारादित्याह-अवच्छेदेति । अवच्छेदोविशेषणं प्रतियोग्यादि विषयत्व ध्रौव्यान्नाभावनिर्विकल्पकमितिभावः । यदि तु अभाव प्रत्यक्षे प्रतियोगि-ज्ञानं न करणम् । तदा-तन्निर्विकल्पकंम्भवत्येवेत्याह-ध्रौव्यइति । अभाव-त्वांशे निर्विकल्पकं त्वावश्यकम् । अनुपस्थितस्याप्रकारत्वात्, निरवच्छिन्न तत्प्रकारिताकबुद्धौ निरवच्छिन्न तद्विषयिताक ज्ञानस्य हेतुत्वाच्चेति बोध्यम् ।

अथ-प्रतियोगिज्ञानमभावस्य ज्ञानमात्रे हेतुः प्रत्यक्षज्ञानमात्रे वा लौकिक प्रत्यक्षे वा । नाद्यःअभाववानित्यत्वानुमित्यादौ व्यविचारात् । न द्वितीया तदनु-व्यवसाये व्यभिचारात्, नापि तृतीयःतमः प्रत्यक्षे व्यभिचारात् । तेजोऽभाव-त्वेन तज्ज्ञानोपगमे इदम्भावो नवेति संशयो न स्यात् । दोषादिदन्त्वविशिष्टे तु भावात्संशयः स्यादिति चेत न । तेजोज्ञानाभावेपीदंत्वेन तमः प्रत्यक्षानु-भवात ।

अभावत्वेनाभावलौकिकप्रत्यक्षे तद्धेतुत्वेघटाभावस्य पटप्रतियोगिकत्वेन प्रत्यक्षं व्यभिचारः । प्रतियोगिपदेन स्वप्रतियोगिनएव वाच्यत्वात् । अथ-घट-त्वावच्छिन्न प्रतियोगितासम्बन्धावच्छिन्न प्रकारत्वान्यप्रकारत्वानिरुपिताभाव विषयताक प्रत्यक्षे घटत्वप्रकारकज्ञानन्तथा । एव परत्वादिकमादायापि वाच्यमिति न निर्विकल्पकापत्तिः । नवा पटप्रतियोगिकत्वेन न घटाभावप्रत्यक्षे व्यभिचार इतिचेत्, न । भ्रमप्रत्यक्षे व्यभिचारात् । तादृशाभावत्वावच्छिन्न विषयताक प्रत्यक्ष इत्युक्तौ तु अभावाभावत्व निर्विकल्पकं दुर्वारम् इष्टापत्तौ गौरवम् । अलौकिकस्य नेति प्रत्यक्षस्यापत्तिः ।

यत्तु-योग्यानुपलब्धेस्तत्तदधिकरणवत्तात्प्रतियोगित्वविशेषिताभावप्रत्यक्ष एव हेतुत्वात् । सामान्यसामग्रया विशेषसामग्रीसहकृतताया एव हेतुत्वान्न निर्विकल्पकाद्यापत्तिरिति, तन्न । अनुपलब्धेर्बाधाभावतया विशिष्टधी मात्र योग्यतायाश्च सन्निकर्षादितयातल्लौकिकप्रत्यक्षे हेतुत्वात्तदापत्तितादवस्थ्यात् ।

नचेन्द्रियसन्निकर्षस्य प्रतियोगिविशेषिताभावप्रत्यक्षे हेतुत्वान्न तदापत्तिः। तथासतिविशेषणतावच्छेदकप्रकारक निश्चयस्य हेतुत्वेनैव सामञ्जस्ये पृथक् प्रतियोगिज्ञानहेतुत्वेमानाभावादिति ।

अत्र-प्राञ्चः तदभावलौकिकप्रत्यक्षत्वमेव जन्यतावच्छेदकम् अन्यप्रतियोगिकत्वेनान्याभावभानं नेष्यते, प्रमेयत्वंनास्ति प्रमेयनेत्यादौ संयोगाद्यवच्छिन्न प्रमेयत्वाभावः स्वरूपसम्बन्धाच्छिन्न प्रतियोगिकत्वेन तत्तत्प्रमेयत्वेन भासते, तथापि-तद्घटज्ञानेपि घटान्तर ज्ञानात । घटसामान्याभावप्रत्यक्षे समनियताभावस्यैक्ये एकधर्मावच्छिन्न ज्ञानेन्यधर्मावच्छिन्नाज्ञानेपि तदवच्छिन्नाभावप्रत्यक्षे च व्यभिचार इति चेन्न । तदभावप्रत्यक्षे तदभावप्रतियोगिज्ञानत्वेन हेतुत्वादित्याहुः ।

अत्र-तमः प्रत्यक्षे व्यभिचार स्तदवस्थएवाभावप्रतियोगितायां घटादिबाधानन्तरं नेत्याकारक प्रत्यक्षापत्तिः । नच-प्रतियोगितासामान्येन घटबाधग्रहोऽभावेसम्भवी, प्रतियोगितासम्बन्धावच्छिन्न प्रतियोगितयाऽभावे घटविशिष्ट विषयकत्वात् तस्येतिवाच्यम् । तदसम्भवेप्यभावः सम्बन्धावच्छिन्न प्रतियोगितया न घटीय इतिबाधधीकाले संयोगादिना-घटभावादेर्न्नेत्याकारक-प्रत्यक्षादे दुर्वारत्वात् ।

वदरादौ कुण्डसंयोगादिधीकालेकुण्डाद्यभावधीवदराभावे घटादेः प्रतियोगिताधीकाले तदभावधीर्न्नानुपपन्नाधारतानवगाहित्वादिति । अत्र-ब्रूमः-घटत्वाद्यवच्छिन्ना याऽभावत्व लौकिक विषयत्वावच्छिन्नाभाव लौकिकविषयता तच्छालिके प्रत्यक्षे घटत्वाद्यवच्छिन्न प्रकारताज्ञानं हेतुः । अनवच्छिन्नान्तेन पटोनास्तीत्यादि विषयताया व्युदासः । अवच्छिन्नान्तेन नीलन्तमइत्यादिविषयताया व्युदासः । घटत्वातिरिक्तधर्मावच्छिन्नप्रतियोगिता सम्बन्धावच्छिन्न प्रकारत्वानिरुपिततत्वेसत्यभाव विषयत्वावच्छिन्नाभाव लौकिकविषयताकप्रत्यक्षे वा तद्धेतुः ।

तेन-प्रतियोगितामात्रेणद्रव्यंनास्ति प्रमेयन्नास्तीत्यादिविषयत्ताकप्रत्यक्षापत्तिरपि वारिता, अभाव निर्विकल्पकस्यंव घटत्व पटत्वादिप्रकारक निखिलज्ञान कार्यतावच्छेदकाक्रान्तत्वात्तादृशप्रत्यक्षस्येतिमिश्रमतमेव युक्तमित्येके ।

वस्तुनो घटत्वावच्छिन्न प्रकारतानिरुपिताभावत्वाद्यवच्छिन्न विशेष्यताक-प्रत्यक्षत्वमेवोक्तकार्यतावच्छेदकसमनियतकार्यतावच्छेदकम्वाच्यम। तथा च तादृशविशिष्ट वैशिष्ट्यविषयताविशेषएव तथास्तु। एतेनानवच्छिन्नान्तेना-भाव विशेषोपलक्षणान्न गौरवमित्यपास्तम्।

इत्थञ्च-नेत्याकारकं प्रत्यक्षमिन्द्रियसम्बद्ध विशेषणतायाः प्रतियोगिवि-शेषिताभावप्रत्यक्षएव हेतुत्वादप्रसिद्धस्वाद्वारणीयम्। एतेनेन्द्रियस्य चक्षुरादि भेदेननानाविधस्य तत्तत्प्रतियोगि विशेषिताभावचाक्षुषत्वाद्यवच्छिन्ने हेतुत्वे गौर-वात् प्रतियोगिज्ञान हेतुत्वमेव युक्तमित्यपास्तम्।

अस्तु वा निर्विकल्पकीयविषयतायाःप्रत्यक्षे अभावत्वभेदः कारणम्, अभावस्य निर्विकल्पकेऽप्यभावस्य न विशिष्ट बुद्ध्यादिकमभावविशेष्यकज्ञाना भावात्। यदि च घटीयत्वादिना अभावस्य प्रत्यक्षमभावत्वांशेनिर्विकल्पकं स्वीकार्यं, तदा विशेष्यतानवच्छिन्ननिर्विकल्पकीय विषयतया प्रत्यक्षे तद्भेदः करणम्।

इत्थञ्च-विशिष्ट वैशिष्ट्य मर्यादांनातिशेत इति दीधितिकृदुक्तपक्षएव श्रेयानित्यलं मन्दबुद्धीनामश्रद्धापादकसूक्ष्मविषयालोचनेनेति समाश्वासः। अभावस्याधिकरणेन स्वरूपमेव सम्बन्धः, विशेषणत्वस्यातिरिक्त सम्बन्धानियत-त्वात्तत्वेनवस्था प्रसङ्गादित्याह—प्राप्त्यन्तरइति।

प्राप्त्यन्तरे वैशिष्ट्याख्ये स्वीकृते वैशिष्ट्यस्यापि-वैशिष्ट्यान्तरेनवस्था स्वरुपंचेदल वैशिष्ट्येन, तथा चेन्द्रियसम्बन्धस्वरुप सम्बन्धित्वमेव प्राप्ति-रितिभावः। नच-यावतां विशिष्टबुद्धिस्तेषामेव सम्बन्धइत्यविशेषेण-क्वचि-द्वैशिष्ट्ये तद्विश्रान्तिः सर्ववदित्यादिज्ञाने वस्तुमात्रस्यैव विशेषणत्वात। यदि च प्रतियोगिज्ञानं नाभावग्रहे हेतुस्तदानुपलब्ध्यापि निर्विकल्पकं दुर्वारम्। यदि च न स्वरुपं सम्बन्धः तदा घटाभाववद्भूतल मित्याद्यनुपलम्भप्रमापि दुर्घटातस्याः सम्बन्ध नियतत्वादित्याह—नचेदिति।

अनुपलब्धि करणकत्वेपि अन्यः प्रकारो दुर्घट इत्यर्थः। संग्रहश्लोकः।

"प्रत्यक्षादिभिरेवमेवमधरो दूरे विरोधोदयः।
प्रायो यन्मुखवीक्षणैकविधुरैरात्मापि नासाद्यते ।
तं सर्वानुविधेयमेकमसमस्वच्छन्दलीलोत्सवम् ।
देवानामपि देवमुद्भवदतिश्रद्धाः प्रपद्यामहे ॥"

यस्यैश्वरस्य मुखवीक्षणैकविधुरैर्द्धर्मिग्राहकमानबाधितः प्रत्यक्षादिभिरप्यात्मा स्वभावः प्रामाण्यमिति यावत् नासाद्यतेऽधरोप्रमाणरुपो विरोधोदयस्तर्कः ईश्वरः कर्त्तास्याच्छरीरीस्यादित्यादिरूपो दूरे सर्वमनु विधेयावश्यं यस्य अस्मासु स्वछन्दाचेतनान्तराप्रयोज्या या लीला सैवोत्सवो यस्य दुःखाभाव शीलत्वात् ।

व्याख्याताः कारिकास्तावत्तृतीयस्तवकाश्रिताः ।"

* * *

सत्वेपि तस्याप्रमाणत्वादिति विप्रतिपत्तिः। ईश्वरीन प्रमाणं तज्ज्ञानस्य स्वप्राक्कालीनस्वसमानाधिकरणज्ञानाविषयविषयकत्वाभावेनाप्रमाणत्वात्। तथा च-प्रमातृत्व प्रमाकरणत्व शून्यस्यवचः कः श्रद्दध्यादित्यत्राह—

"अव्याप्तेरधिकव्याप्तेरलक्षणमपूर्वदृक् ।
यथार्थानुभवोमानमनपेक्षितयेष्यते ॥"

दृक् ज्ञानं भावप्रधानो निर्द्देशः। तथा चागृहीतग्राहित्वं न लक्षणं धारावाह्निक प्रमायामव्याप्तेः, भ्रमातिव्याप्तेश्च। स्वमतेलक्षणमाह—यथार्थेति। अनुभवइतव्यर्थं स्मृतेरपि यथार्थायाः प्रमात्वादित्यत्राह—अनपेक्षतयेति। स्मृतेर्जनकानुभवप्रामाण्याधीनप्रामाण्यकतया सापेक्षत्वात्तत्र-न प्रमाव्यवहार स्तान्त्रिकाणामिति तद्व्यावृत्तिः।

नच-ज्ञानानां स्वोत्पत्तिक्षणविषयकत्वान्न धारावाह्निकबुद्धव्याप्तिः। यथार्थत्वेन विशेषणाच्च नातिव्याप्तिरिति तल्लक्षणमदुष्टमिति वाच्यम्। क्षणानामतीन्द्रियत्वेन विनोपनयं मानासम्भवात्। उपनये च तमादायागृहीतग्राहित्वस्यायोगादितिभावः।

अथ-स्मृतेरप्रमात्वे पूर्वानुभवेकिम्मानमतीतानुभवाविषयं तदनुभवविषयत्वरुपं तत्वमुल्लिखन्ती स्मृतिस्तत्रमाणमुच्यत इति चेन्न। अनुभवं हेतुं विना स्मरणायोगात्। अन्यदेव स्मृतिहेतुरस्त्विति चेन्न। अननुभूते स्मृत्यनुदयादन्वय व्यतिरेकाभ्यां स्वसमानाकारानुभवस्यैव तद्धेतुत्वसिद्धेः। किन्तद्यनुभवेमानमिति चेत्फलमभिज्ञान विशेष एवानुभूयते च स्मृत्युत्तर स्मृत्याकार्यं भूतत्रानुभूत स्मरामीति।

ननु तथापिस्मृतेस्तत्रांशेनपेक्षत्वात्प्रामाण्यमुचितं, नच पूर्वानुभवविषयत्वमेवानुव्यवसायविषयस्तन्नातरिक्तं तिवाच्यम् अननुव्यवसीयमानानुभवात् तत्वेन स्मृत्यनापत्तेरिति चेन्न। धर्ममात्रस्यैवतथात्वात्। तर्ह्यनुभवेपितत्तोल्लेखापत्तेरितिचेन्न।

अनुभवादिदन्तोल्लेखः संस्काराधीन ज्ञानानां तदोल्लेखः व्युत्पन्नस्य तत्तज्ज्ञान विषयबोधकत्वेन तस्यग्रहणात्तथैवप्रामाणिकप्रयोगात। आप्तज्ञाने तत्पदोल्लेखः स्यान्न त्वदन्तोल्लेखइतिचेन्न। दोषविशेषाधीनात्संस्कारप्रयोज्यज्ञानादपीदन्ताया एवोल्लेखात् मरुमरीचिष्विदं जल मिति दर्शनान्मरीचिरेवेदंत्वेगृह्यमाणाजलत्वेनगृह्यते इतिचेदस्त्वेवं शङ्खइदपीतरुपपश्यामीत्यत्र-कागतिः। शुक्लत्वमेव न गृह्यतेशुक्लरुपं पीतत्वेनगृह्यतएवेति चेदगृहतांतमसिनीलंरुपं पश्यामीत्यत्रकागतिः।

किञ्चित्स्वाप्नज्ञानादेवेदन्तोल्लेखोनतु स्वाप्नज्ञानेपि प्रागननुभूतमपि दोषादेवतत्तत्कालसम्बन्धादिरुपमिदन्त्वादिकं भासताम्, अतएव-स्वाप्नज्ञानं स्मृतिरेवेतिचेत् साध्वीभ्रान्तिरतएव गौरिति स्वाप्नत्वस्यानुभवत्वघटितत्वात्। पूर्वाननुभूतसंसर्गगोचरत्वाच्च।

उपनयभूता स्मृतिस्तु तज्जनिका, पूर्वानुभवानुसारात् प्रमाऽप्रमापिस्वाप्नम्। ननु अन्यत्रान्यवैशिष्ट्य विषयकत्वाद्भ्रमएव, प्रमापिवासुप्तोहमित्याचार्यैर्गुणकिरणावल्यां प्रामाण्यकथनात्। अविद्यामध्यगणनं च तत्प्रचुरत्वादतएव स्वाप्नत्वं मानसत्वव्याप्याजातिरितिनव्यमतं निरस्तम्। शाब्दानुमित्यादेरप्याचार्यैरुक्तत्वात्। अप्रामाणिकत्वाज्जाग्रत्वादितुल्यत्वाच्च-चाक्षुषादि भ्रमवच्छाब्दादि भ्रमएवेतिचेन्न। बाधकाभावादितिदिक्।

ननु-धारावाहिके नाव्याप्तिः पूर्वज्ञानजन्य ज्ञाततायाः पूर्वज्ञानाविषयायाउत्तरज्ञानविषयत्वात्। किञ्चिदेवज्ञानंकिञ्चिद्विषयकमितिनियमाय ज्ञानजन्यायाविषयनिष्ठाया ज्ञातताया आवश्यकत्वात्, यज्ज्ञानं यत्र ज्ञातताजनकं तदेव तद्विषयकमितिनियमः। किञ्च-साज्ञाततोपादानज्ञानजन्या नवा, आद्ये तस्या उत्पत्तेः प्राक् तदुपादानज्ञानस्य विषयतानियमार्थमन्यस्याः स्वीकारे तत्राप्येव मत्यनवस्था।

द्वितीये कार्यत्वं हेतुस्तत्रवोपादानज्ञानजन्यत्वं व्यभिचारीति न परमेश्वरस्य क्षित्यादि कर्तृतयासिद्धि- रित्यत्राह—

"स्वभावनियमाभावादुपकारोपि दुर्घटः।
सुघटत्वेपि सत्यर्थेऽसति का गतिरन्यथा॥"

स्वभाव विशेषेण विषयतानियमाभावे ज्ञाततारूप उपकारोपि दुर्घटस्तदुत्पत्तेः प्राक् प्रत्यासन्नेन ज्ञानेन, ज्ञातता क्वचिदेव जन्यत इति नियमानुपपत्ते,। तत्तादुपादानस्यापि हेतुत्वात्, सति विद्यमानेर्थे सुघटत्वेपि असति अविद्यमानेभाविन्यतीते च कागति स्तत्र ज्ञाततोत्पत्ययोगात्, तस्मात् स्वरूपविशेषएवातीतादि साधारणो विषयतेतिभाविघटादिज्ञानादघटत्वादावेव ज्ञाततांभट्टमते धर्मधर्मिणोरभेदादघटोपि विषयइति चेन्न।

सर्वघटानां भाविघटमात्र विषयकज्ञानविषयकज्ञानविषयतापत्तेः। घटत्वादेरिव तैरभेदस्य स्वीकारात्, नतु नित्यानित्ययोरपि भाविघटप्रकारकभाविभूतलज्ञानादौ च कागति नंहि घटभूतलयोरप्यभेद इतिदिक्।

ननु-क्रिया कर्मणि किञ्चिज्जनिकेति ज्ञान क्रिया घटनिष्ठ किञ्चिज्जनिकाऽन्यथा क्रियाजन्यफल शालित्वरूपं कर्मत्वमेव न स्यादित्यत्राह—

"अनैकान्तादसिद्धे र्वा नचलिङ्गमिहक्रिया।
तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोधिके॥"

क्रिया यदि धात्वर्थ स्तदा शरेण गगनं संयुनक्तीत्यादौ संयोगादिना गगनादिनिष्ठ

किञ्चिद्‌जननादनैकान्तिकः। करणव्यापारश्चेत्तदापि परामर्शादिनाऽनैकान्तिकः।

अथ-क्रियास्पन्दस्तत्रासिद्धिः ज्ञानक्रियायाः स्पन्दनात्मकत्वासिद्धेः। अथ ज्ञातोघटइत्यध्यक्षादेव तत्सिद्धिरत्राह—तद्वैशिष्ट्येति। ज्ञातव्यस्वरूपविशेषरूपत्वज्ञानस्य वैशिष्ट्यमेवेति नज्ञाततासिद्धिः। अन्यथा दृष्टोघटः कृतोघट इत्यध्यक्षाद्दिष्टताकृततयोरप्यापत्तेः तदुच्यते।

"अर्थेनैव विशेषोस्ति निराकारतया धियाम्।
क्रिययैव विशेषोहि व्यवहारेषु कर्मणाम्॥"

यथा धियां निराकारत्वेपि घटज्ञानं पटज्ञानमित्यादि व्यवहारेषु ज्ञानादौ घटनियतविशिष्टधी घटादिना अर्थेनैव, नतु ज्ञाननिष्ठघटाद्याहित किञ्चिद्धर्मेण तथाव्यवहारेषु घटोज्ञातः पटोज्ञात इत्यादि विशिष्टबुद्धिषु घटादौज्ञानादि विशिष्टधीर्ज्ञानादि क्रिययैवेत्यर्थः।

अर्थेनेति तृतीयासंयोगेन विशिष्टधीरित्यादिवत्। केचित्तु तृतीयाऽभेदे यथा घटादिरेव धियां विशेषो व्यावर्त्तकस्तथा तत्तज्ज्ञानादिकमेव कर्मणां विशेषइत्यर्थः। विशेषोव्यावृत्तिबुद्धिरिति वार्थ इत्याहुः।

स्वरूपसम्बधेनैवोपपत्तौ नातिरिक्ता ज्ञातता कर्मत्वं त्वतीतानागतादाविवविद्यमानेपि गौणं विषयत्वमेवेति भावः। ननु ज्ञानमतीन्द्रियं योग्यकार्याभावे कथमनुमेयमप्रतीतञ्च न व्यवहारयोग्यमिति ज्ञान व्यवहारानुपपत्त्यैव ज्ञाततासिद्धिः। ज्ञानं हि न स्वप्रकाशं सुखादिवत् नाप्यन्यग्राह्यमाशुविनाशिनो ग्राहकेण निवाशातग्रहणकालेऽनवस्थानात्।

किञ्च-ज्ञानस्य योग्यत्वे ज्ञानप्रत्यक्ष तत्प्रत्यक्ष धारा स्यादिति गतं जीवनेनापि भोजनादि मूलेनेति चेत् न। यतो ज्ञानस्यायोग्यत्वे साध्याप्रसिद्ध्या नानुमानमपीतिनिःष्प्रमाणमेव ज्ञानंस्या दिच्छादे स्तद्धेतोरिति न्यायेन ज्ञानहेतोरेव सम्भवात्।

सुखादिवच्च ज्ञानस्य द्विक्षण वृत्तितया ज्ञानं ज्ञानत्व निर्विकल्पकं विशेष्ये-विशेषणमिति न्यायात्, ज्ञानत्वविशिष्टवैशिष्ट्यावगाहि लौकिक प्रत्यक्षमिति-सम्भवति विषयस्य पूर्वभावेनैव हेतुत्वात्।

यदि च जात्यतिरिक्तस्य किञ्चिद्धर्मप्रकारेण भान नियमाज्ज्ञान विशिष्ट-बुद्धौ ज्ञानविशेष्यकज्ञानमेव हेतुस्तदानिर्विकल्पकोत्तरमपि ज्ञानमिति ज्ञानग्रहे-जानामीति ज्ञानांशे लौकिक प्रत्यक्षं प्राग्वर्त्तिज्ञानस्य वा ज्ञानत्वादि विषयकत्वे तु द्वितीयक्षण एव जानामीति लौकिकं सूपपाद ज्ञानप्रत्यक्षादि धारा तु चाक्षुषा-दि सामग्र्यानिरुध्यते।

कथमन्यथात्मादि निष्ठज्ञातता प्रत्यक्ष तज्जन्यज्ञानादिप्रत्यक्षधारा विघा-तस्तवापीतिदिक्। ननु तथापि नित्यज्ञानं न प्रमा प्रमाणाजन्यत्वादित्तीश्वरो न प्रमाया आश्रयः कारणंवेत्यत्राह—

"मितिः सम्यक् परिच्छित्ति स्तद्वत्ताच प्रमातृता।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते॥"

सम्यक् परिच्छित्तिः यथार्थानुभवएव तत्वं प्रमात्वम्। नतु जन्यत्व विशेषितम्, गौरवात। नित्यप्रमासिद्ध्यभावदशायां व्यावर्त्याप्रसिद्धेः। तच्च नित्ये-ति, तद्वत्ता-तत्समवायित्वमात्रं प्रमातृत्वमीश्वरे न विरुद्धम्।

नन्वेवमपि मन्त्रायुर्वेदवत्तत्प्रामाण्वमाप्तप्रामाण्यादिति सूत्रे ईश्वरस्य प्रामाण्यमुक्तं विरुद्ध्येतेत्राह—तदयोगइति। प्रमायोगव्यवच्छेदवत्वमेव रज-तत्वाभाववद्विशेष्यकत्वावच्छिन्न रजयत्व प्रकारत्वादिना भ्रमावगाहित्वेपि शुक्त्यादौ रजतत्वानवगाहित्वादिदिक्। सग्रहश्लोकः।

"साक्षात्कारिणि नित्ययोगिनि परस्वत्वानपेक्षस्थितौ।
भूतार्थानुभवे निविष्टनिखिल प्रस्तारिवस्तुक्रमः।
लेशादृष्टिनिमित्तादृष्टिविगमप्रभ्रष्टशङ्कातुषः।
शङ्कोन्मेषकलिङ्किभिः किमपरै स्तन्मेप्रमाणंशिवः॥"

साक्षात्कारि प्रत्यक्षो नित्ययोगिनि सदा सम्बद्धे, अतएवेन्द्रियव्यापारद्वारानपेक्ष स्थितिके एतादृशेभूतार्थानुभवे-यथार्थानुभवे निविष्टो विषयीभूतो निखिल प्रस्तारिणां वस्तूनां पदार्थानांक्रमो वास्तवस्वभावो यस्य सः तादृशानुभवविषयविश्वइति पूर्वार्द्धार्थः। लेशतोऽप्यदृष्टिविशेषादर्शनं तन्निमित्तिकायादृष्टिः रागद्वेष मोहात्मिका तद्विगमेन प्रभ्रष्टः शङ्कातुषो वेदाप्रामाण्यशङ्कालेशोयस्मात्, यद्वा तादृशदृष्टि विगमेन भ्रष्टाः शङ्का तुषा यत्र सः तत्र शङ्का वद्भिरपरैः पाखण्डैः किम् अथवाऽप्रामाण्यशङ्काविषयैर्मन्वादिभिः किं तैस्तस्य नान्यथासिद्धिरितिभावः।

"व्याख्याताः कारिकाएताश्चतुर्थस्तवकाश्रिताः।"

  

ननु-ईश्वरे प्रमाणसत्वे सवमेतदेवं तदेव च न पश्यामइति चेन्न। नेषस्थाणोरपराधोयदेनमन्धो न पश्यतीतिस्थाणोर्वेणोरचेतनस्यप्रव्यक्त मानस्यस्थाणोभंगवतइति महद्व्याख्यानमनादेयम्। नच प्रमाणादर्शनमकिञ्चित्करमिति व्याख्या, प्रकृतेनुमानस्य प्रमाणत्वात्, तथा हि—

"कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः।
वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः॥"

कार्यं सकर्तृकं कार्यत्वात्, इत्याद्यनुमानेनविश्ववित्साध्यः, आयोजनं कर्म प्रयत्नजन्यं कर्मत्वात्, अस्मदादिशरीरकर्मवत्। धृतिर्गुरुत्ववतां पतनाभावः ब्रह्माण्डादिपतनाभावः पतनप्रतिबन्धकप्रयत्नप्रयुक्तः धृतित्वात्, पतत्पतत्रि पतनाभाववत्। पतत्पत्रिसंयुक्त तृणादिवद्वा।

एतेनेन्द्राग्नि यमादि लोकपालप्रतिपादका आगमा व्याख्याताः, तेषां तदधिष्ठान देशानाम्वा ईश्वरावेशेनैव पतनाभाववत्वात्, तथा च श्रुतिः एतस्य वाक्षरस्यगार्गि प्रशासने द्यावा पृथिव्यौ विधृते तिष्ठतः इति प्रशासनं दण्डभृतःप्रयत्नः आवेशस्तत्तच्छरीरावच्छिन्न प्रयत्नवत्वं तन्निबन्धनएव तादात्म्य व्यवहार आत्मैवेदं सर्वं ब्रह्मैवेदं सर्वमित्यादि।

केचित्तु-तत्तद्दिग्वर्ति वस्तुधारकत्वादीश्वर एव तत्तल्लोकपालतयाव्यवह्रियते। सर्वविशश्च तत्तद्विषयकयत्नएवेत्याहुः। आचार्यतात्पर्यन्तुप्रागुक्तएव। नच विजतीय प्रयत्नोधारको नेश्वरे सम्भवतीति वाच्यम्: पतनाभावावच्छिन्ने प्रयत्नस्यैव तथात्वात। शरीरधारकताप्येतस्येति स्थिरवायवएव धारका इत्यादिकमपास्तमितिदिक्। आदिना नाश संग्रहः ब्रह्माण्डनाशःप्रयत्नजन्यः द्रव्यनाशत्वात्पाट्यमान पट नाशवत्। पद्यते गम्यतेऽनेनेति पदं व्यवहारः घटादिव्यवहारः स्वतन्त्रपुरुषप्रयोज्यः व्यवहारत्वात् आधुनिक कल्पित लिप्यादि व्यवहारवत्। प्रत्ययः प्रमावेदजन्यप्रमा वक्तृयथार्थ वाक्यार्थज्ञानजन्या शाब्द प्रमात्वात: आधुनिकवाक्यजशाब्दप्रमावत्। श्रुतिर्वेदः असंसारिपुरुषप्रणीतो वेदत्वात् इति व्यतिरेकी नचपरमतेऽसंसारि पुरुषाप्रसिद्धिः। आत्मत्वमसंसारि वृत्तिजातित्वमत घटत्वादि वदित्यनुमानेनासंसारि पुरुषं प्रसाध्यं तदनुमानात्वेदः पौरुषेयो वेदत्वादिति व्यतिरेकीत्यपिकश्चित्।

वाक्यं वेदः वेदः पौरुषेयो वाक्यत्वात भारतवत् इत्यन्वयी। संख्याविशेषोद्व्यणुकपरिमाण जनिका संख्या, इयंसंख्या अपेक्षाबुद्धिजन्या, एकत्वान्य संख्यात्वादित्यस्मदाद्यपेक्षाबुद्धि जन्यत्वधाधेऽतिरिक्तापेक्षाबुद्धिसिद्धौ तदाश्रयेश्वरसिद्धिः नचासिद्धिः द्व्यनुकपरिमाणं संख्याजन्यं जन्यपरिमाणत्वात्। घटादिपरिमाणवत्। नचदृष्टान्तासिद्धिः। द्विकपालादि परिमाणात्रिकपालादिघटपरिमाणोत्कर्षीयसमवायिकारणकत्वसाधनादवीतरबाधात्तत्सिद्धिः। नचपरमाणुपरिमाणन्तदसमवायिकारणं अणुपरिमाणत्वात्, द्व्यणुकपरिमाणवदिति। विश्वविदव्ययइति। विशिष्टस्याव्ययत्वान्वयाविदोपि नित्यत्वलाभः।

ननु ग्राह्यानुमाने कार्यत्वं न कृतिसाध्यत्व मसिद्धेरितिचेन्न। प्रागभावप्रतियोगित्वस्य तत्वात, प्रागभावत्वत्वं गन्धवद्भिन्न समयावृत्यभावत्वम्, अखण्डोपाधि र्वा। पक्षतावच्छेदकावच्छेदेन साध्यासिद्धेरुद्देश्यत्वाच्च न कार्यस्य घटादेः सकर्तृकत्वसिद्ध्यंऽशतः सिद्धसाधनम्। नवा पक्षतावच्छेदकस्य हेतुत्वं दोषः।

कार्यत्वं साध्यसमानाधिकरणमितिसहचारग्रहेपि कार्यं सहेतुककितिबुद्धेरभावाच्च। ध्वंसप्रतियोगित्वेसति समवेतत्वंहेतुः, ध्वंसत्वत्वं कादाचित्कत्वे-

क्षितिगन्धानाधारसमयवृत्तित्वमखण्डोपाधिर्वेत्याहुः।

अथ-तथापि सकर्तृत्वं न साध्यंअस्मदादिना सिद्धसाधनात्, अर्थान्तराद्वा। ज्ञानादेरेव जनकतया कर्त्तृत्वजनकत्वेन बाधाच्चेति। तज्जन्य प्रत्यक्षजन्यमिच्छाजन्य मित्यादि साध्यं अदृष्टद्वारा जन्यत्वस्य विशेष्यता सम्बन्धावच्छिन्न कारणत्वप्रतियोगिक समवायावच्छिन्न जन्यत्वस्य वा साध्यत्वाच्च नादृष्टजनकास्मदादि ज्ञानजन्यत्वेन सिद्धसाधनमर्थान्तरं वानच-यागदान हिंसादे रिच्छात्मकस्य यजेतेत्यादि श्रुत्याऽदृष्टजनकत्वेपि ज्ञानकृत्यो भयत्वेमानाभावः। यागादिद्वाराऽदृष्टप्रयोजकत्वस्यानपवादात्। तावताप्यदृष्टस्य द्वारत्वसम्भवादीश्वरस्मरणाद्यात्मक प्रकृतज्ञानस्य तत्वसम्भवाच्च।

यागत्वादिकं विनिगमकाभावादिच्छायामुत्कटत्वादिना साङ्कर्यं प्रसङ्गाच्च मानसत्वव्याप्यमेवेत्यपिवदन्ति, मानसशुभाध्यवसायादे स्तीर्थादिगमनवदभक्ष्यादेरदृष्टहेतुत्वश्रवणाच्च। नन्वत्र शरीरजन्यत्वोपाधेरङ्कुरादौ साध्याव्यापकत्व सन्देहेपि सन्दिग्धानैकान्तिकत्व नचाङ्कुरादेरपि पक्षत्वात्पक्षीय व्यभिचार संशयो न दोषः।

लाघवाद्व्यभिचारज्ञानत्वेनैव विरोधित्वेन पक्षतत्समयोरपि तस्य विरोधित्वात्। नचैवं सन्दिग्ध साध्यकानुमितिमात्रोच्छेद। साध्यसन्देहे पक्षे हेतुग्रहेव्यभिचारग्रहात्। अन्यथा-पक्ष धर्मत्वाग्रहादितिवाच्यम्। अनुकूलतर्ककालीनव्यभिचारज्ञानस्याविरोधित्वेन, व्याप्तिनिश्चयकालीन हेतौ पक्षधर्मत्वविषयकस्यसाध्यसंशयस्य सम्भवेन च तत्सामग्र्यात्। अतएवानुकूल तर्कानवतारे पक्षे तरोपाधिरपि दोषायेतिचेत्।

नैवम्-प्रकृते ज्ञानत्व कार्यत्वाभ्यांहेतु हेतुमद्भावज्ञानाद्यनुकूल तर्कावतारादि सम्भवादितिदिक्।

परेतु-स्वोपादानगोचरा स्वजनकादृष्टाजनिकाया जन्यकृति स्तदजन्यं समवेत जन्यं स्वोपादान गोचर स्वजनकादृष्टजनकजन्यान्यापरोक्ष चिकीर्षाकृतिजन्यंकार्यत्वात्। घटवत्, घटादावंशतः सिद्धसाधन वारणायाजन्या-

न्तं तादृक्कृतिजन्यंयद्यत्त्ववन्तद्भिन्नं तदित्यर्थः।

नातो द्व्यणुकादेरुपादानगोचरकृत्यप्रसिद्ध्या पक्षत्वाभावप्रसङ्गः। नच-फूत्कारादेरपक्षत्वे सन्दिग्ध साध्यकत्व च तत्रानैकान्तिक सशयः स्यादतः प्रतियोगिकोटौ गोचरान्तं शब्दादे मृदङ्गादिगोचर तादृशकृतिजन्यत्वपि नह्यु पाद न गोचर तादृशकृतिजन्यत्वमिति मन्त्र वशेष पाठपूर्वक स्पर्शजन्य कांस्यादि बालस्पर्शजन्यादृष्ट द्वाराजनक जन्य कृतिजन्यस्या पक्षत्व तत्र-सन्दिग्धानैकान्तिकत्वं स्यात्।

एवं-स्वोपादान शरीरगोचरोद्ध्वं चरणादितपः कृतिजन्यकालीय शरीरगौरुपादौ तत्स्यात्, अतस्तत्कोटौस्वजनकेत्यादि कांस्य चालनादिक तुस्वजनकादृष्टजनक जन्यकृतिजन्यमेवत्यदोषः।

ध्वंसगगनैकत्ववारणाय समवेतजन्यमिति शब्द फूत्कारादौ सिद्धसाधनवारणाय साध्ये गोचरान्तं उक्त कांस्य चालनादौ तद्वारणाय स्वजनकेत्यादि, नच साध्ये पक्षे च गोचरान्तद्वयं मास्तु मृदङ्गादि गोचरकृतिजन्य शब्दादिस्तु पक्षवहिर्भूतएव दृष्टान्तोऽस्त्विवतिवाच्यम्।

अदृष्टेतर व्यापारद्वाराऽस्मदादि कृतिजन्यत्व सिद्ध्यर्थान्तर वारणाय साध्ये तन्निवेशावश्यकत्वे शाब्दादावनैकान्त सशय वारणाय पक्षेपि तदावश्यकत्वात्। तादृश शब्दादि कर्तृतयापि भगवत्सिद्धये पक्षे तन्निवेश्यम्। अशतः सिद्धसाधन वारणाय साध्ये तन्निवेशस्यावश्कत्वाच्च। एतेन-जतकादृष्ट जनकाद्येत्युभयत्रापिमास्त्वित्यपास्तम्। तादृश कांस्यचालनादिकर्त्तृतया भगवत्सिद्ध्यर्थां पक्षे तदुपादाने साध्येप्यावश्यकत्वात्। यदि च स्वजनकादृष्टजनककृतेर्नस्वजनकत्वं मानाभावादिति विभाव्यते, तदा-पक्षे तन्नोपादेयम्। मास्येतु देयमेव, अन्यथासगन्तरीय ज्ञानादीनांद्यणुकादौ सिद्धसाधनाभावेप्युक्तकांस्यचालनादावदृष्टजनक कृतिजन्यत्वसिद्ध्यर्थान्तरापत्तेः।

वस्तुगत्या-स्वोपादान गोचरकृतिजन्यं यद्यतद्वत्त्वावच्छिन्नभेदकूटवत्त्वेन कांस्य चालनादेरपि पक्षान्तर्गतत्वादित्याहुः। अतः साध्ये स्वोपादानेत्यत्र-

स्वपदस्य द्वयणुकपरत्वे साध्याप्रसिद्धिः। घट दिपरत्वे घटादौ सन्दिग्धानैकान्तिकत्वं स्वोपादान गोचरत्वादिनाहेतुत्वाभावात, अप्रयोजकत्वंबोध्यम्।

अन्ये तु द्रव्याणि ज्ञानेच्छाकृतिमन्ति कार्यत्वात् कपालादिवत। साध्यता विशेष्यतया हेतुत्वं कार्यस्य समवायेनपक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वान्नांशतः सिद्धसाधनम्। नच-बहिरिन्द्रिय ग्राह्यत्वादिकमुपाधिः। अनुकूल तर्केण हेतोर्व्याप्यतानिर्णये तदनवकाशात्। नच-त्रितयस्य मिलितस्यसाध्यत्वेऽप्रयोजकत्वं मिलितत्वेनाहेतुत्वात्। प्रत्येकं साध्यत्वे ज्ञानेच्छायाः साध्यत्वेसर्गान्तरीय ज्ञानादिना सिद्धसाधनमितिवाच्यम्। मिलितत्वे साध्यत्वेपि कार्यकारणभावत्रयस्य प्रयोजकत्वात्।

सर्गाद्यकालीनं द्रव्यं ज्ञानवत् कार्यादित्येव वानुमानं, पक्षतावच्छेदकावच्छेदेनसाध्यसिद्धयेष्टसिद्धिरित्याहुः। तत्तत्पुरुषीय घटाद्यर्थं प्रवृत्तित्वावच्छिन्नं तत्पुरुषीय घटादिमत्व प्रकारकोपादान प्रत्यक्षत्वेन हेतुत्वावश्यकत्वात्।

प्रत्यक्षत्वेन कार्यसामान्ये हेतुत्वे मानाभावः। तथाचिकीर्षायाअपिप्रवृत्तावेव हेतुत्व कृतेरपि विलक्षणकृतिमत्वेन विलक्षणविलक्षण कृतित्वेन वा घटपरत्वाद्यवच्छिन्नएव हेतुत्वात्। द्वयणुकादिहेतुत्वे मानाभाव इति चेन्न। प्रवृत्ताविव घटादावपि तयोरन्वयव्यतिरेकाभ्यां हेतुत्वसिद्धेः तत्र-घटत्वपटत्वादीनां आनन्त्यात्कार्यत्वमेव साधारण्यात्कार्यतावच्छेदक कल्प्यते। शरीरलाघवमपेक्ष्य संग्राहकत्व लाघवस्यापिन्याय्यत्वात। कृतेस्तु यद्विशेषयोरितिन्यायात्सामान्यतोपि हेतुत्वम्। दीधितिकृतस्तु कृतित्वेन घटत्वेन हेतुहेतुमद्भावेपि खण्ड घटकाले कुलालकृतेरसत्वादीश्वरकृतिसिद्धि रित्याहुः।

ननु-कुलालकृतिस्तु तत्रापिस्वप्रयोज्य कपालद्वय संयोगद्वारेणास्ति। कथमन्यथा-दण्डादेरपि हेतुत्वम। वैशेषिकनये-द्वयणुकपर्यन्तानां नाशेनतत्सम्भव इतिचेत्तर्हि-दण्डादि जन्यतावच्छेदकं विलक्षणघटत्वमेववाच्यम्। तदेव च कृतिजन्यतावच्छेदकमितिचेन्मैवम्।

यत्र-दण्डस्य स्वप्रयोज्य कपालद्वयसंयोगेन सत्वं नतु विशेष्यतया कुलालेः तत्रैव खण्ड घटे तत्सिद्धि, कृते लाघवेन वशेष्यतयैव हेतुत्वात्। वैशेषिकनयेपि-

पूर्वकपालादि ध्वंसाना मुत्तरकपालादावन्ततः कालत्वेनापि जनकत्वमिति तत्रा-प्रयोज्यत्वम्। नच गौरवम्, विजातीयसंयोगत्वेनैव सम्बन्धत्वात्। प्रयोज्य-त्वंतु सम्बन्धत्वेन समं वास्तविक संयोगकथनमित्यप्याहुः। अथैवं-शरीरत्वेन चेष्टात्वेन च हेतुहेतुमद्भावान्नित्य शरीरादिकमपि स्यादिति स्यात्. किन्नश्छि-न्नं नहि तयोर्नित्यत्वज्ञानादि नित्यत्वं बाधकं यत्किञ्चि द्विशेषान्वय व्यतिरेका-भ्यामेव सामान्यतो हेतुत्वसिद्धौ शरीरत्वादिनापि स्यादित्येवमाक्षेपइति चेन्न। कथन्नसिद्धिरिति वाच्यमायुष्यता बाधकादितिचेत् किन्तच्चेष्टात्वावच्छेदेन जन्यत्वमिति चेत्तुल्यंममापि।

वस्तुतः परमाणव एव प्रयत्नवदीश्वरात्मसंयोगाधीन चेष्टावत् ईश्वरस्य-नित्यानि शरीराणि सन्तु स्वीकृतमेतदाचार्यैरपि टीका प्रथमश्लक व्याख्याने चेष्टाया नित्यत्वे तु मानाभावः। अनित्यचेष्टाया अपि सर्वदा सम्भवात्, वायुपरमाणवएव नित्यक्रियावन्तस्तथा। अतएव तेषांसदागतित्वमित्यन्ये।

ईश्वर प्रयत्नाधीन क्रियावतांसर्वेषामेवेश्वरशरीरत्व मित्यपरे। आका-शशरीरं बृह्मेति श्रुतेराकाशं तच्छरीरमित्यन्ये। अथा त्रापि ज्ञानत्वेच्छात्वाद्य-वच्छेदेनात्ममनो योगादि जन्यत्वं बाधकमस्तीतिचेत्तर्हि गतं नित्यस्नेहादिना स्नेहत्वादिनैव जलादिजन्यतासम्भवात्। अनित्यस्नेहत्वादिकमेव तथेति तुल्यम्। निखिल सर्गाद्यकार्यजनकज्ञानादेर्लाघवादेकत्वस्य नित्यत्वस्य च सिद्धेः श्रुतिरपि पक्षपातिनी नित्यंविज्ञानमित्यादिका नित्यज्ञानसिद्धौ अथैव मिष्टसाधनतानुमितिरपिहेतुत्वादनुमितिरपि नित्यास्यादितिचेन्न। इष्टसा-धनता प्रत्यक्षादेरपि हेतुत्वादनुमितित्वेनाहेतुत्वात्।

अथोपादान प्रत्यक्षस्यालौकिकस्याहेतुत्वाल्लौकिकप्रत्यक्षत्वेन हेतुत्वाल्लौ-किकप्रत्यक्ष सिद्ध्यापत्तेरितिचेत् सिद्ध्यत्येवेतिकिमापादयति सौम्य तर्हि लौ-किकविषयतयाप्रत्यक्षं प्रतीन्द्रियादि हेतुत्वं भज्येतेतिचेन्न। कस्तथा हेतुत्व मेने जन्यत्व चाक्षुषत्वाद्यवच्छिन्नं प्रत्येबेन्द्रियत्व चक्षुष्ट्वादिनाहेतुत्वात्।

वस्तुतः पुरेपुरे शालमिवजगति जगदीश ज्ञानेच्छादित एवं तत्कार्याणां स्वल्प बहूत्तमाधमदेश कालादिनियमः। वदन्ति पामरा अपीश्वरेच्छैव नियामिकेति,

नचैवं तत्तद्देशकालनियततत्तत्कार्योत्पत्तिमन्वज्ञानादितएव कर्यनिर्वाहेगतं दण्डादि कारणत्वेनेति वाच्यम्। तदनुगमकत्वेनैव दण्डादीनां घटादि हेतुत्वात्। नहि दण्डादिरेव घटादे रनन्यथासिद्धि नियतपूर्ववर्त्ती न वेमादिकपालादिकं समवायीत्यत्रान्यन्नियामकं पश्यामः। तथा च पद्यम्।

"समालोच्य क्षुद्रेष्वपि भवनाथ भवने।
नियोगाद्भूतानां श्रितसमयदेशस्थितिलयम्।
अये केयं भ्रान्तिः सततमपिमीमांसनजुषाम्।
व्यवस्थातः कार्ये भवति जगदीशापरिचयः॥"

किञ्च-निखिलवेदार्थदर्शिनो वेदकर्तुर्भगवतोपलापे बीजं न पश्यामः। स्मृतिरपि—

"वेदान्त विद्वेदविदेवचाह"

मिति ममैवपद्यम्।

"विभाव्य भुवने भूयो यदीशस्य निदर्शनम्।
तमीशं नैव मनुते तदीशेन विडम्बितम्॥"

तदनुमित्यादिकमेव तथा।

यन्ममानुमत्यादिकन्न साक्षात। किन्तु तत्तत्करणद्वारा तत्तत्सम्पादकम्। नहि राजाज्ञादितो विनांशुकं तन्तुस्तन्तुं विना पटइति, दण्डत्वादिनैव हेतुतेतिस्वभाववादः, अचेतनं चेतनाधिष्ठितमित्यादिना चेतनाभिप्रायानुसारे तु न तथेति तत्तत्कार्यं निरुपित विशेष्यतामात्रस्यान्यत्रापि सत्वात्, तत्तत्कार्यविशिष्टस्य तत्तत्कार्य निरुपितविशेष्यतया वा ऽस्मदादि यथार्थं सविषयकस्य स्वर्गादौसंस्काररूपस्य परमार्थादि कल्पने कपिलादीनाञ्च बहूनां तदर्थं दर्शिनां कल्पने च गौरवमिति बोध्यम्।

शरीर विशिष्टस्य कर्त्तृतया विशेषणबाधात्मको विशिष्टव धः। प्रत्यक्षात्मक ईश्वरो न कर्त्ता ऽशरीरत्वादित्यनुमानबोधो वा। यद्वा-क्षित्यादिकं न सकर्त्तृकंशरीराजन्यत्वादिति सम्प्रतिपक्ष, यद्वाकर्त्ता शरीर्य्येवेति व्याप्तिविरोधिनी, यद्वाशरीरि कर्त्तृकत्व सहचारदर्शन प्रवृत्तव्याप्त्याशरीर कर्त्तोपनेयः पक्षधर्मतात्वशरीरीतिविशेषबाधः। यद्वा-शरीरिजन्यत्वाद्युपाधिना व्याप्यत्वाविनाभावज्ञानासम्भवात्।

अस्य का सिद्धिरिति कार्यत्वहेतौ पञ्चदोषा अत्राह—

"न बाधोस्योपजीव्यत्वात्, प्रतिवन्धोनदुर्वलैः।
सिद्ध्य सिद्ध्यो र्विरोधो न नासिद्धिरनिवन्धना॥"

बाधोन अधिकरणज्ञानंविना अभावज्ञानासम्भवात। अस्य कार्यत्वस्य हेतोर्द्धर्मि साधनकरणज्ञापकस्यतूपजीव्यत्वेन बलवत्वात् कर्त्तृत्वेनैव तज्ज्ञापकत्वमिति प्रतिवन्धः, सम्प्रतिपक्षोन शरीराजन्यत्वादिति हेतोः शरीरांशस्य व्यर्थत्वेन व्याप्यत्वासिद्धस्य दुर्वलत्वात्। अखण्डाभावतया न वैयर्थ्यमिति चेत्, तथाप्यजन्यत्वोपाधिना दौर्वल्यम। पूर्वसाधनव्यतिरेकस्यापि व्यापकताग्राहकमानासत्वेऽउपाधित्वादिति बोध्यम्। तृतीयेपि कार्यत्वव्याप्तेः पक्षधर्मतासहचारित्वा द्विपक्ष बाधकतर्काच्च बलवत्वं कर्त्ताशरीर्य्येवति व्याप्तेश्चदुर्वलतयां न तया प्रतिवन्धः :

चतुर्थे यदि पक्षधर्मतयाऽशरीरीसिद्धस्तदा न विरोधः तदाकार्यत्व हेतोः शरीरि कर्त्तृकत्वव्यभिचारोपलम्भात्तद्व्याप्त्यभावात्। यदि तु न सिद्धः तथापि व्याप्ति पक्षधर्मतोभयोः शरीरित्वाशरीरित्वयोरीश्वर लक्षणैक धर्मिवृत्तित्वाभाव लक्षणोविरोधो न ईश्वर रुप धर्म्यग्रहात्।

पञ्चमेत्वाह-नासिद्धिरिति, शरीरजन्यत्वोपाध्यधीना व्याप्यत्वासिद्धि र्न तोऽनिवन्धना अनुकूल तर्काभावरूपंयद्व्याप्यत्वासिद्धि निंवन्धनं तच्छून्य प्रकृतेनुकूल तर्कसद्भावेनोपाधित्वायोगादितिभावः।

ननु-यदीश्वरः कर्त्तास्याच्छरीरीस्यात्सुखादिमान्स्यादित्यादयः प्रतिकूलतर्का अनुकूलतर्काभावश्चेत्यत्राह—

"तर्काभासतयान्येषां तर्काशुद्धिरदूषणम् ।
अनुकूलस्तु तर्कोत्र कार्यलोपो विभूषणम् ॥"

प्रतिकूलतर्का ईश्वरासिद्ध्या आश्रयासिद्ध्याद्यत्याभ्यासः, कर्त्तृरभावे कार्यलोपः स्यादित्यनुकूलतर्कस्तु विभूषणं व्याप्तिग्राहकं प्रकृतेस्तीतिभावः। एतादृश तर्कोपस्कृतोहंसर्वस्य प्रभव इत्यागमोपीश्वरसाधकः।

"आर्षन्धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्क्केणानुसन्धत्ते सधमं वेद नेतरः ॥"

इत्यादिना तर्कानुगृहीतागमस्यैव बलवत्वात्। आर्ष-मन्वादिवाक्यम्। धर्मोपदेशं धर्मजनकोपदेशम्। वेदं धर्मं ईश्वरस्तदुपदेशं वा धर्मं धर्मशास्त्रम्। (अत्रादर्शे पतितं पत्रमेकं अतोनलिखितम्।) पूर्वेति-पूर्वापरस्मिनसर्वं पूर्वापरकालवृत्ति कृतिप्रचयएव भावनाख्याताः। तत्प्रचयान्तर्गत यत्किञ्चिदेकसत्वे पचतीति आद्यस्य प्रागभावसत्वेपक्ष्यतीति चरमध्वंससत्वेऽपाक्षीदिति प्रयोगइतिभावः।

यत्नत्वमनुकूलत्वं पूर्वापरीभूतत्वञ्चाख्यातार्थ इति वर्द्धमानः। नन्वस्तुकृतित्वेन कृतिः लृङोर्थ आख्यातार्थस्तुव्यापारत्वेनैव रथोगच्चतीत्यादि साधारण्यादत्राह—

"भावनैवहि यत्नात्मा सर्वाख्यातस्य गोचरः ।
तयाविवरण ध्रौव्यादाक्षेपानुपपत्तितः ॥"

तयाकृत्या कृतिवाचकपदेनेतियावत्। पचति पाकं करोतीति यत्नार्थक कृत्याख्यातविवरणाद्यत्ने शक्तिः। असति बाधकेव्यवहारादिवद्विवरणादपि शक्ति सिद्धिः। रथोगच्छतीत्यादौ व्यापारे लक्षणा।

ननु-यत्नस्याक्षेपलभ्यत्वान्नवाच्यत्वमतआह—आक्षेपेति। व्यापारस्येन्धनावचेतने यत्न व्यभिचारित्वान्नयत्नानुमापकत्वं सम्भवतीतिभावः।

ननु-पचति पाक यत्नवानितिविवरणात्कर्तरिशक्तिः स्यादत्राह –

"आक्षेपलभ्ये संख्येये नाभिधानस्य कल्पना ।
संख्येयमात्रलाभेपि साकांक्षेण व्यवस्थितिः ॥"

आख्यात वाच्यस्याक्षेपादेव संख्येयस्यलाभान्न तत्र शक्तिः, पचतीत्युक्ते चैत्रो-मैत्रो वेति जिज्ञासा ओदनं ते धनञ्वेतिजिज्ञासावत्, कृत्या सामान्यतः कर्त्राद्या-क्षेपेविशेषजिज्ञासाया औत्सर्गिकत्वादितिबोध्यम् ।

अथ-संख्येय मात्रलाभेपि कर्त्तृ विशेषस्य चैत्रादेरलाभ इत्यत्राह--साकां-क्षेणेति । साकांक्षेण समभिव्याहृत कारकवाचक पदेन व्यवस्थितिर्विशेषलाभः अत्र-यं यं भावनान्वेति तन्तमाख्यातसंख्यापीति व्युत्पत्तेर्भावनान्वययोग्यसं-ख्यान्वयः तद्योग्यञ्च प्रथमान्तपदोपस्थाप्यः तेन सुप्यत इत्यादौ स्वापादिव्यु-दासः, नीलोघटस्तिष्ठतीत्यादौ नीलादेस्तण्डुलं पचतीत्यादौ तण्डुलादे रितरवि-शेषणत्वे नान्वयबोधसामग्र्याः प्रतिबन्धिकायाः सत्वाद् भावनान्वन इति-बोध्यम् ।

तद्योग्यो मुख्यविशेष्य इत्यपरे । इतरविशेषणत्व तात्पर्याभाववत्वेसति-प्रथमान्त पदोपस्थाप्य इत्यन्ये । अस्तु वा कर्म धर्मो विधिस्तत्राह –

"अतिप्रसङ्गान्न फलं नापूर्वं तत्वहानितः ।
तदभावान्न कार्यञ्च न क्रियाप्यप्रवृत्तितः ॥"

कर्मणो-धर्मः कार्यत्वं विध्यर्थोवाच्यः कर्मशब्दार्थश्च स्वर्गादि फलम्वाऽपूर्वं वा तत्र न फलं कर्मशब्दार्थोऽतिप्रसङ्गात् । स्वर्गादिसाधनत्वज्ञानाविषयेपि स्व-र्गादिकार्यत्वज्ञाने प्रवृत्तिप्रसङ्गात् । नाप्यपूर्वतत्त्वहानिः शाब्दबुद्धेः प्रागुपस्थि तादपूर्वत्वहानि प्रसङ्गात् । अनुपस्थितौ तुकथं शक्तिधीः । अथ-नापूर्वत्वेन शक्तिः किन्तु-कार्यत्वेन, तद्रूपेण च, घटादौ शक्तिधीर्योग्यतया तु शाब्दबोध कार्यं विशेषापूर्वभानमत्राह-तदलाभान्न कार्यत्वि नित्यनिषेधापूर्वयो रलाभप्रस-

ङ्गात्। तत्र-फलकामस्य नियोज्यस्याभावात्। तदन्वययोग्यतया अपूर्व लाभात।

यद्वा-शक्तिधी शक्तिस्मृतिशाब्दबोधानां समान विषयत्वेन हेतुहेतुमद्भावा श्रोक्तरीतिसम्भव इत्याह-तद्भावादिति। घटादावेव शक्ति बुद्धौ शाब्दबोधे पूर्वालाभप्रसङ्गादित्यर्थः। क्रियापि न कर्मशब्दार्थं इत्याह-न क्रियापीति, क्रियायागादि स्तद्धर्मो न कार्यत्वं तन्मात्रमपि नविध्यर्थः। अनिष्ट साधनत्व ज्ञानकालेकार्यत्वज्ञानादप्रवृत्तेः।

ननु-करणं शब्दस्तद्धर्मोभिधा तज्ज्ञानं प्रवर्त्तकमिति सैव विध्यर्थ इति-तत्राह—

"असत्वादप्रवृत्तेश्च नाभिधापि गरीयसी।
बाधकस्य समानत्वात्परिशेषोपि दुर्लभः॥"

अभिधायां मानाभावात्। यागाभिधायिकाभिधेत्यादिवाक्यजन्यज्ञानादभिधा-पिन गरीयसी न विध्यर्थत्व योग्या। नत्वन्यस्य लिङर्थत्वे परिशेषादभिधैव-तदर्थं इत्यत्राह-बाधकस्येति। कर्तृ धर्मादा विवात्रापि बाधकसत्वादित्यर्थः। ननु-करणस्य यागादेर्द्धर्मइष्टसाधनत्वंविध्यर्थोस्तु तत्राह-

"हेतुत्वादनुमानाच्च मध्यमादौ वियोगतः।
अन्यत्रक्लृप्तसामर्थ्यान्निषेधानुपपत्तितः ॥"

इष्टसाधनत्वं न लिङर्थ इतिशेषः हेतुत्वात्। विध्यर्थहेतुत्वेनोपन्यासात्, यथा-ग्निकामोदारुणा मथ्नीया दित्युक्तौ कुतइति प्रश्नेयतो दारु मथन मग्निसाधन मित्युत्तरंइतश्च दारुमथनमर्थवत, अग्निसाधनत्वादिति लभ्यते, तत्राप्ताभि-प्रायस्य विध्यर्थत्वेयुज्यते नत्विष्टसाधनत्वस्याभेदे हेतुत्वेनोपन्यासानौचित्यात्, उपन्यास वैयर्थ्याच्च।

किञ्च-यद्यनुमितेनापि विधिवाक्येनेष्टसाधनतैव बोधनीया, तदानुमाना-दिष्ट साधनताकामे विधिवाक्यानुमानं न स्यात्। तरनिमृत्यु मित्यादिना

मृत्युब्रह्महत्या सन्तरणकामोऽश्वमेधेन यजेतेतिश्रुत्यनुमानं सर्वतन्त्र सिद्धम् ।

अथ-अतएवबाधका द्विशिष्याग्न्यादिरूपेष्ट साधनत्वं विध्यर्थइति पक्षस्त्या-

ज्यः । इष्टत्वे नेष्टस्य साधनत्व विध्यर्थः स्याद्विशेष सामान्यानुमान सम्भ-वात् । मास्तु वोक्तश्रुत्यनुमानमत आह-मध्यमादाविति । मध्यमोत्तम-पुरुषयोर्लिलङ् इष्ट साधनतया वियोगात् । अबोधकत्वात् कुर्याः कुर्यामित्या-दौलिङआज्ञादिकं प्रतीयते, आज्ञाचाभिप्रायएवेतिमध्यमपुरुषार्थः, अन्यत्रेति आज्ञा ध्येषणानुज्ञा प्रश्न प्रार्थनाशंसा लिङइच्छा शक्तत्वकल्पनादित्यर्थः । उल्लंघने क्रोधादि भयजनिकेच्छाज्ञा अध्येषणीये प्रयोक्तुरन्यत्र ग्रह द्योतिका-ध्येषणा निषेधाभाव व्यंजिकानुज्ञा प्रमोजनादि जिज्ञासा प्रश्नः प्राप्तीच्छाप्रार्थना शुभेच्छा आशीः निषेधेति न कलंजंभक्षये दित्यत्रेष्ट साधनत्वस्य निषेधस्यबाधि-तत्वादित्यर्थः ।

वलवदनिष्टाननुवन्धित्वन्तुनार्थः, श्येनेनेत्यादौ अलसस्य यागादिदुःखेः वलवद् वेषेपि यजेतेत्यादौ च बाधितत्वादितिभावः । स्वमतमाह-

"विधिर्वक्तुरभिप्रायः प्रवृत्यादौ लिङादिभिः ।
अभिधेयानुमेयात्तु कर्तृरिष्टा भ्युपायता ॥"

प्रवृत्ति निवृत्यो र्योवक्तु रभिप्रायः सलिङादिभिरभिधेयः । सप्तमी उद्देश्य-तायांप्रवृत्ति निवृत्तिम्वोद्दिश्ययोभिप्रायइत्यर्थः । नन्वभीष्टसाधनत्वाद्यज्ञाना-त्कथं प्रवृत्यादिकमत्राह-इष्टेति, इदमनिष्टस्याप्युपलक्षकं न कलञ्ज मित्यादा वाप्ताभिप्रायाभावेनानिष्टसाधनत्वानु मानात् ।

अत्र वदन्ति, इच्छामात्रे शक्तावीश्वरेच्छायाः सर्वविषयकत्वान्निषेधावि-रोधः । वलवदनिष्टाननुवन्धित्व विशिष्ट साधनत्वप्रकारकेच्छायां शक्तौ च लाघवा द्विशिष्टेप्रकारएव शक्तिरुचिता, विशिष्ट शक्तौविशेष्य विशेषणभावे विनिगमनाविरहात् पृथक् शक्तौ नानावाक्यापत्तिः, प्रकारतयाविशिष्टस्य निवे-शेपि तथाभावे विनिगमकाभावान्नाना शक्ते दुर्वारत्वात् ।

प्रकारतया बलवदनिष्टाननुबन्धित्वमिष्टसाधनत्वञ्च विशकलितमेवे-च्छानिष्ठशक्तेरेकस्याव्यासज्यवृत्त्यवच्छेदकतावदितिचेत्, साधननिष्ठाया एक शक्तेरेव स्वरूपसम्बन्धविशेषेणावच्छेदकमस्तु।

किञ्च–विशिष्टप्रकारकेच्छाबोधोन स्यात्, तत्र गुरुत्वाल्लक्षणेति चेत् लाघवादिष्टसाधनत्वे बलवदनिष्टाननुबन्धित्वे च पृथगेव शक्तिरस्तु, श्येने-नेत्यादौ तु बलवदनिष्टाननुबन्धित्वेन तात्पर्यम्। अथालसस्य यागदुःखेपि बलवद्द्वेषाद्यजेतेत्यादौ तद्बाधः नचेष्टजन्यसुखाधिकदुःखाजनकत्वं तदर्थं। समदुःखाजनकत्वंसमधिकदुःखजनक व्यावृत्तमिति वाच्यम्। मरणादिदुःख-वदत्युत्कट न्यूनदुःखजनकेप्रवृत्त्यापत्तेरिति चेन्न। वस्तुगत्या इष्टजन्यंयत्सुखं तद-नपकृष्ट दुःखाजनकत्वस्य विध्यर्थत्वात्। अपकृष्टत्वञ्च न्यूनत्वेन, समत्वपि-उत्कृष्टत्वे दाधिकत्वेपि अत्यन्तापकृष्टत्वेनेति न दोषः।

इत्थञ्च–फलतो निषेधविधिनाक्वचिदत्युत्कटदुःखजनकत्वज्ञानं, क्वचि-त्तुअनपकृष्ट समदुःखजनकत्वज्ञानं प्रवृत्ति प्रतिबन्धकं जन्यते तत्तत्प्रवृत्तिफले सुखे-तज्जन्यदुःख द्वेषमपेक्ष्य उत्तेजिका, तेन तथाज्ञानेपि रागान्धस्य प्रवृत्तिः।

नन्वेवं यागादौ तादृश दुःखाजनकत्वस्य विधिना बोधनादलसस्य प्रवृत्तिः स्यात्, उदये वा तद्दुःख द्वेषादपकृष्टात्तत्समा बाधीर्न्न तूत्कटेति। फले उत्क-टेच्छा विरहदुःखजनकत्वज्ञानत्वेनैव प्रवृत्तित्वावच्छिन्नप्रतिबन्धकत्वान्न दोषः। दुःखोप्युत्कटानुत्कटत्वादिज्ञानन्तु-प्रवृत्ति फले उत्कटेच्छाविघातकम् वस्तुतः प्रवृत्तौ समान विशेष्यतया बलवद्द्वेषएव कार्यसहभावेन प्रतिबन्धकः। इत्थञ्चालसस्य स्वल्पदुःखजनकेपि बलवद्द्वेषादप्रवृत्तिरिति।

यत्तु-पापाजनकत्वं विध्यर्थस्तदभावनिषेधस्थले प्रतीयते नञा समभि-व्याहृतविधेः पापजनकत्वएव निरूढलक्षणा नञा तात्पर्यग्राहकमिति मतं तत्र दूरस्थं सरोगच्छेत्याप्तवाक्ये गतिश्चिन्त्या। नहिलौकिकनिषेधवाक्यमयोग्य-मिति वक्तुं शक्यम्।

यदपीष्ट विरोधि साधनत्वमेव विध्यर्थः। नकलञ्जं मित्यादौ नञा विरो-ध्यर्थः सच व्युत्पत्ति विशेषान्निरुढेर्थेष्ट साधनत्व मध्यगामीतीष्ट विरोधिस-न्धिभत्वलाभइति, तदज्ञश्रुतिरमणीयम्।

परेतु-श्येनो बलवदनिष्टाननुबन्ध्येव नहि सा हिंसाऽदृष्टाद्वारकमरणोद्दे-श्यक मरणानुकूल व्यापारस्यैव हिंसात्वात्। गङ्गामरणार्थं क्रियमाणस्त्रसन्ध्य स्तवपाठादिवारणायादृष्टाद्वारकेति चोदना लक्षणोर्थोधर्म इत्यत्रार्थपदेन श्येनवा-रणन्तु नहिंसात्वेन, किन्त्वनर्थ प्रयोजनकत्वेनेति न सा हिंसास्यादिति निषेध-विषयः। नाप्यभिचारित्वेनस निषिद्धः। श्येनफलस्य मरणानुकूलव्यापारस्यै-वाभिचाररूपस्य निषिद्धत्वात्, श्येनेनाभिचरन्नित्यस्याभिचारकामः श्येनेन यजतेत्यर्थपर्यवसानादित्याहुः।

तत्र-मरणानुकूलव्यापारोभिचार इत्यत्र कोभिचारः न क्रियान्तरम् : असत्वात्, पापञ्चेत्तर्हि श्येनस्यापिदुःखजनकत्वमावश्यकम्। वैरिमरण प्रयोजक खङ्गपातवज्रपातादिकञ्चेत्तदकर्त्तु रभिचार कर्त्तुः पापस्य वार्तापि न स्यात्। न भवत्येवेति चेदविगानेन प्रवृत्तिः स्यादाभिचारके कर्मणि प्रायश्चि-त्तोपदेशव्याघातः।

तदुक्तानर्थप्रयोजकत्वाभावस्यस्थादनर्थप्रयोजकत्वे वा न कथं विध्यर्थ वाधः। अनर्थ प्रयोजकेप्याप्तैर्निषेधविधिप्रयोगादिति बोध्यम्।

इदन्तु बोध्यम् आख्यात मात्रस्यकृतित्ववल्लिङादेरिच्छात्वमपि शक्यता-वच्छेदकं, क्वचित्तन्मात्रप्रकारकबोधात्, क्वचिच्चव्युत्पत्ति विशेषात्, क्वचिच्च लक्षणयाविशेषबोधसम्भवादिति दिक्। श्रुतेरित्यस्य व्याख्यामाह—

"कृत्स्न एवहि वेदोयं परमेश्वरगोचरः।
स्वार्थद्वारैव तात्पर्यं तस्य स्वर्गादिवद्विधौ॥"

अयं पठ्यमानः सर्व एव वेदः ईश्वर विषयःयज्ञो वै विष्णुः पश्यत्यचक्षुरित्यादी-एतस्यानु शासने-गार्गि द्यावा पृथिवीविधृतेतिष्ठत इत्यादि।

ननु-सिद्धार्थतया नैतेषां स्वार्थपरत्वं ग्रावाणः प्लवन्त इत्यादिवदित्यत्राह-स्वार्थ द्वारैवेति। यथा-यन्नदुःखेन सम्भिन्नमित्यादि, स्वर्गादि बोधकार्थं वेदानां स्वर्गकाम इत्यादि विध्येकवाक्यतया तत्रापिप्रामाण्यं तथेश्वर मुपासीतेति विध्येकवाक्यतयैषामपीतिभावः।

धाक्यात् वैदिक प्रशंसानिन्दा वाक्यानिप्रशंसा निन्दाज्ञान पूर्वकाणि-प्रशंसा निन्दावाक्यत्वात्। परिणति सुरसाम्रफलमित्यादिवत्। संख्याविशेषादित्यस्य व्याख्यानमाह—

"स्याम भूवं भाविष्यामीत्याद्या संख्याचवक्तृगा।
समाख्यापि न शाखानामाद्यप्रवचनादृते॥"

तदेत द्वहु स्यामित्यादि वैदिकोत्तमपुरुषोणस्वतन्त्रोच्चारयितृनिष्ठ संख्याभिधीयते। सच स्वतन्त्रोच्चारयिता ईश्वर एव संख्यामन्यामाह-समाख्येति। शाखानां हि सर्वासां काठक कालकाद्याः समाख्या विशेषाःश्रूयन्ते, तेन चाध्ययन मात्र निबन्धनाः अध्येतृणा मानन्त्याप्त्, अनादौ संसारेन्यैरपि तदध्ययनात्, तस्मादतीन्द्रियार्थदर्शीभगवानेव कारुणिकः सर्गादावन्याद्यदृटाकृष्टः कठादि शरीर विशेष मधिष्ठाय यां शाखामुक्तवान्। तस्यास्तन्नाम्ना व्यपदेशः इति सिद्धम्—

"इत्येवं श्रुतिनीनिसप्लवज्ञरैर्भूयोभिराक्षालिते।
येषां नास्पद मादधासि हृदये तेशैलसावाशयाः।
किन्तु प्रस्तत विप्रती परिधयोप्युच्चैर्भवच्चिन्तकाः।
काले कारुणिक द्वयैव कृपया ते भावनीया नरा॥"

इति शब्दः स्वरूपे एवं शब्दः प्रकारे श्रुतयो वेदानीतयो न्यायाः तासां ये संप्लवाः अवबोधास्तएवजलानि सन्ताप हारकत्वात्-तैः क्षालिते निरस्तकु तर्काभ्यास जनित संस्कारे शैल सारो लौहम्। भगवन्तं प्रार्थयति-प्रस्तुतस्येशस्य विप्रतीपाः प्रतिकूलाः विधयः प्रकारा येषां किवाप्रकर्षेण स्तुतौ प्रतिकूला प्रकारा यै स्तेपिकाले एतत्कृतविपदनुभवकाले भवच्चिन्तकास्त्वयैव भावनीया यतस्त्वं करुणाशीलः स्वीयं वृत्तमावेदयति—

"अस्माकन्तु निसर्ग सुन्दरचिराच्चेतो निमग्नंत्वदी।
त्यद्धानन्दनिधौ तथापि तरलं नाद्यापि सन्तृप्यति॥"

तन्नाथत्वरितं विधेहि करुणां येन त्वदेकाग्रतां ।
यातेचेतसि नाप्लुवाम शतशो यास्याः पुनर्यातनाः ॥''

निमग्नं चिरात् श्रवणादिभिः कृतनिदध्यासनम् अद्धा सत्यम्, तरलं नानाविषयकर्मवातत्प्रेरितं सन्तृप्तदि स्थिरीभवतियेन त्वत्करुणाधीन दृढ़ समाधिना त्वदेकात्मता त्वन्मात्र विषयता तदेव निजसम्पत्तेरितिभावः ।

"इत्येष नीतिकुसुमाञ्जलिरुज्वलश्री- ।
र्यद्वासयेदपि च दक्षिणवामकौद्वौ ।
नोवा ततः किममरेशगुरोर्गुरुस्तु
प्रीतोस्त्वनेनपदपीठ समर्पणेन ॥'

इति समाप्तौ नीतिर्न्यायः । दक्षिण वाम नासापुटद्वयं वासयति । वस्तुतो नानयोः प्रीतिरुद्देश्येत्याह-नोवेति । नोवासयेत्तः किं यद्वा-दक्षिणवामकौ-शिष्टाशिष्टौ वासयेत, भगवद्वासनावन्तौ कुर्यात् । भगवत्प्रीतिरेवोद्देश्येत्याह नोवेति । किन्त्वमरेशस्य-शक्रस्य गुरुर्बृहस्पति र्ब्रह्मा वा तस्यापि दुर्विद्याप्रद ईश्वरः स प्रीतो भवतु । अनेन कुसुमाञ्जलिनामक भगवद्विषयक प्रमाणतर्करुपं पदं तस्यपीठं तद्विषयः अन्योपि कुसुमाञ्जलि राराध्यपदस्थाने समर्प्यते । मत्कृते तद्ग्रन्थ निवेदनमखिलविद्यानिर्मात रीशस्यैवेति सएवाम्यनेन प्रीतो भविष्यतीतिध्वनितम् ।

"कुसुमाञ्जलिकारिकाः समाप्ता विवृताः श्रीजयरामतान्त्रिकेण ।
कुसुमाञ्जलिमञ्जसाधिगच्छेद्यदि पश्येदिह हेलयापि चित्ते ॥"

कुसुमाञ्जलिविवृतिः समाप्ता ॥



# कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालय
## कामेश्वरनगर, दरभङ्गा

विक्रेतव्य पुस्तकें

| क्र० सं० | पुस्तक नाम | | लेखक एवं सम्पादक | मूल्य |
|---|---|---|---|---|
| १ | विद्यापति-संस्कृत-ग्रन्थावली— | | | |
| (१) | प्रथमभाग ( हिन्दीअनुवादसहित ) ( विभागसार एवं शैवसर्बस्वसार ) | स० | (१) डॉ० जयमन्त मिश्र (२) डॉ०इन्द्रकान्त झा | ७५।- |
| (२ | द्वतीय भाग ( हिन्दी अनुवाद सहित ) (शैवसर्वस्वसार-प्रमाणभूत-पुराणसंग्रह एवं दानवाक्यावली) | स० | (१) डा० जयमन्त मिश्र (२) प० श्री आनन्द झा | ७५।- |
| २ | म० म० गोकुलनाथ-ग्रन्थावली— | | | |
| (१) | रसमहार्णवः | स० | (१) प० श्री धर्मनाथ झा (२) प० श्री कुमुदनाथ मिश्र | ६।- |
| (२) | आलोकमंगलविचारः | स० | ,, ,, ,, | २०।- |
| (३) | मासमीमांसा | | (१) प० धर्मनाथ झा | ६।- |
| (४) | अनुमितिदीधितिविद्योतः | स० | (१) ,, ,, ,, (२) प० श्री रामसेवक झा | ७।- |
| (५) | गोकुलनाथग्रन्थगुच्छः ( दिक्कालनिरूपणम् रूढिव्याख्या-रहस्यम् मिथ्यात्वनिरूपणञ्च ) | स० | ,, ,, | ७।- |
| (६) | कुण्डकादम्बरी | स० | (१) प० श्री धर्मनाथ झा (२) प० श्री कुमुदनाथ मिश्र | २०।- |
| (७) | तत्त्वचिन्तामणौ उपमान-रश्मिचक्रम्, म० म० गोकुलनाथः ) | स० | (१) श्री रामसेवक झा (२) प० श्री रामचन्द्रझा | २५।- |
| (८) | एकावली (छन्दोग्रन्थः ) | | डा०शशिनाथझाकृतव्याख्यासहिता | —२० |

## ३ म० म० वाचस्पतिग्रन्थावली–

| | | |
|---|---|---|
| (१) कृत्यप्रदीपः | स. (१) डॉ. जयमन्त मिश्र | |
| | (२) प. धर्मनाथ झा | २५।- |
| | संशोधक प. श्री कृष्णानन्द झा | |
| (२) श्राद्धचिन्तामणिः – | स. (१) डॉ. जयमन्त मिश्र | ३०।- |
| | (२) श्रीधर्मनाथ झा | |
| | (३) प. श्रीरामचन्द्र झा | |
| (३) आचारचिन्तामणिः— | स. (१) डॉ. जयमन्त मिश्र | ३५।– |
| | (२) प. धर्मनाथ झा | |
| | (३) प. श्रीकृष्णानन्द झा | |
| | (४) प. श्रीशशिनाथ झा | |
| (४) पितृभक्तितरङ्गिणी (प्रायश्चित्तव्यवस्थासारसमुच्चयसहिता) | (१) प. श्रीरामसेवक झा | |
| | (२) प. श्रीप्रभुनारायणशर्मा | २५।– |
| (५) कृत्यमहार्णवः | (१) प. श्रीरामसेवकझा, प्रभृति | ३०।- |
| (६) व्यवहारचिन्तामणिः | प. प्रभुनारायणशर्मा, प्रभृति | १७- |
| (७) शुद्धिचिन्तामणिः | स. प. श्रीरामचन्द्र झा | |
| | डॉ. प्रभुनारायणशर्मा | २०।– |

## ४ सुलभसंस्कृतग्रन्थमाला –

| | | |
|---|---|---|
| (१) मेघदूतम् (गुटका मूल) | प. श्री रामचन्द्रमिश्र | ०।५० |
| (२) हरविजयम् (प्रथमसर्ग) | ,, ,, ,, | १।– |
| (३) रघुवंशम् (मूलमात्र सम्पूर्ण ) | ,, ,, ,, | ४।- |
| (४) समासशक्तिदीपिका – | ले. महावैयाकरण दीनबन्धु झा | ५।– |
| (५) उपसृष्टधात्वर्थसंग्रहः | ले. ,, ,, ,, | ६।- |
| | स. डॉ. शशिनाथ झा | |
| (६) मेघदूतम् ( जगद्धरीयरसदीपिनी-व्याख्योपेतम् ) | स. डॉ. हृषीकेश झा | १२।- |

(७) कुमारभार्गवीयम् भानुदत्तकृतम् — सं. प. श्रीरामचन्द्र मिश्र २५।-

(८) ध्वनिकल्लोलिनी (हिन्दी अनुवादसहित) — ले. अनु. प. श्री आनन्द झा २५।-

(९) विज्ञानं समाजश्च — ले. डॉ. सरयू प्रसाद गुप्त २५।- सं वि. वा. रामचन्द्र मिश्र

(१०) सुभाषितावली (हिन्दी अनुवादसहित) — ले. विद्यावाचस्पति प. श्रीउपेन्द्रझा २०।-

(११) मिथिलामाहात्म्यम् — स. प. श्रीधर्मनाथ झा ५।-

(१२) अभिनन्दनमाला — सं. प. श्रीरामचन्द्र मिश्र ६।-

(१३) वाजसनेयिनां विवाहादिसंस्कारपद्धतिः- — सं. प. श्रीतेजनाथ झा १५।-

(१४) छन्दोगानां विवाहादिसंस्कारपद्धतिः — सं. प. श्रीतेजनाथ झा १५।-

(१५) मिथिला का इतिहास — ले० डॉ० रामप्रकाश शर्मा ७५।-

(१६) स्मृतिसाहस्री — ले० 'रमाकर' १५।-

(१७) लौकिकन्यायरत्नाकरः — स० प० श्रीरामचन्द्र मिश्र ४५।-

(१८) तिथिनिर्णयः (सपरिशिष्टः) — ले० म० म० राजनाथ मिश्र २४।- सजिल्द सं० वि० वा० रामचन्द्र झा २०।-अजिल्द

(१९) ग्रहणमाला — ले० म० म० हेमाङ्गद ठाकुर २०।- सं० प० श्री ब्रजकिशोर झा

(२०) वैदेहीचरितम्, महाकाव्यम्- — ले० प० श्रीरामचन्द्र मिश्र ३०।-

(२१) नियमावली एवं पाठ्यग्रन्थावली- (१९८३ से प्रवृत्त) — प्रकाशक सं० वि० वि० (दरभङ्गा) ७।-

(२२) स्मृतिरेखा — ले० प० श्रीरामचन्द्र मिश्र १५।-

५ महाराजाधिराजकामेश्वरसिंह-ग्रन्थमाला—

(१) पमलघुमञ्जूषा (म० म० शशिनाथ झा कृत-सरलाख्यव्याख्योपेता) — सं (१) वि०वा० श्रीरामचन्द्रमिश्र (२) डॉ० शशिनाथ झा १५।-

(२) भारतीयसर्वस्वम् (हिन्दीव्याख्योपेतम्) — ले० प० श्री भोलानाथ मिश्र ४५।-

(३) प्रयोगपल्लवः (भवनाथकृत) — डॉ. श्री शशिनाथ झा ३७।-

| | | |
|---|---|---|
| (४) तर्कसंग्रहः<br>(न्यायबोधिनी सीता-पद्माव्याख्यासहितः) | प. श्री आनन्द झा | ४५।- |
| [५] शकुन्तलाविवृतिः | ले. प. श्री आंखी झा<br>स. प. श्री कृपाकान्त ठाकुर | १५।- |
| (६) उपवनविनोदः<br>(हिन्दीटीकासहितः) | प. श्री कृष्णानन्द झा | १२।- |
| (७) वातावरणनाटकम्- | मूल. पं. श्री गोविन्द झा<br>अनु. डा. शशिनाथ झा | १२।- |
| (८) हृत्परिवर्त्तननाटकम – | प. श्रीआनन्द झा | ७।- |
| (९) म०म० माधवीयादभुतदर्पणः | प. श्री रामचन्द्र झा | ४५।- |
| (१०) शुद्धिदीपिका | म. म. कोणेश्वरः | २५।- |
| (११) छन्दोगाह्निकोद्धारः<br>[ श्रीदत्तकृतच्छन्दोगाह्निकं रघुनाथकृतव्याख्योपेतम् ] | म. म. शङ्करमिश्रः<br>स. डा. प्रभुनारायण शर्मा<br>डॉ. लक्ष्मीनाथ झा | १७।- |
| (१२) स्मृतितत्त्वसमुच्चयः | म. म. सचलमिश्रः | ८।- |
| (१३) स्मृतिदीपिका | म. म. उमापतिकृता, डॉ. शशिनाथझाकृत-शुद्धिकौमुदी सहिता | १६।- |
| (१४) गूढार्थदीपिका | म. म. वामदेवकृता<br>स. १ डा. जयमन्त मिश्र<br>२ डा. रामसेवक झा<br>३ डा. रामचन्द्र झा<br>४ डा. शशिनाथ झा | ३५।- |
| [१५] समयप्रदीपः— | सं. १ डा. जयमन्त मिश्र<br>२ प. श्री धर्मनाथ झा<br>३ डा. श्री लक्ष्मीनाथ झा | १५।- |
| [१६] पूजाप्रदीपः | स. १ डा. जयमन्त मिश्रः<br>२ प. रामसेवक झा<br>३. प. प्रभुनारायण शर्मा<br>४. प. श्री रामचन्द्र झा | २५।- |

[१७] लघुशब्देन्दुशेखरः — स. प. श्री ताराकान्त झा — ४८।-
[१८] शिशुबोधः नाह्लिदत्तपञ्चविंशतिका — स. प. देवचन्द्र झा — १५।-
[१९] न्यायवैशेषिकवार्त्तिकम् — स. प. श्री अनन्तलाल ठाकुर
[२०] भार्गवविक्रमम् — स. प. मतिनाथ मिश्र
[२१] विभक्त्यर्थप्रकाशिका — स. डा. जयमन्त मिश्र

## यन्त्रस्थ

१. ऊणादिरत्नकौमुदी — स. प. श्री अर्जुन झा
२. न्यायमञ्जरी (हिन्दी टीकोपेता) — स. प. श्री आनन्द झा
३. हस्तलेखसूची-
४. प्रत्यभिज्ञाप्रदीपः — स. प. श्री रंगेश्वरनाथ मिश्र
५. रसिकमनोरंजिनी — स. महावैयाकरण दीनबन्धु झा
६. तत्त्वचिन्तामणि — स. प. श्री आनन्द झा
७. द्वैतनिर्णयः — स. डा. रामसेवक झा
८. तत्त्वनिर्णयः — स. डा. जयमन्त मिश्र
९. वाजसनेयिनित्यकर्मपद्धतिः — स. प. श्री तेजनाथ झा
१०. छन्दोगनित्यकर्मपद्धतिः- — ,, ,,
११. पातञ्जल महाभाष्यमंथनी — प. सत्यदेव शर्मा 'सूजन'
१२. कालमाधव — प. रामकरण शर्मा
१३. विद्यापति संस्कृतग्रन्थावली — स. डा. जयमन्त मिश्र
भाग ३ एवं ४ — डा. शशिनाथ झा
१४. आचारादर्श — प. दिगम्बर झा
१५. संस्कृत वाङ्मय में बिहार का योगदान- — डा. जयमन्त मिश्र कुलपति
१६. कौमुदीमूलार्थविद्योतिनी — म. वै. दीनबन्धु झा
१७. वैयाकरणभूषणसारदीपिका- — ,, ,,
१८. काव्यमालिका — म. म. श्री कृष्ण सिंह ठाकुर

१९. राधानयनद्विशती — म० म० मोहन मिश्रः
२० न्यायकुसुमाञ्जलिविवृतिः — विद्यावाचस्पति प. रामचन्द्रमिश्रः

विशेषः—प्रकाशन की कीमत 'कुलसचिव' कामेश्वरसिंह दरभंगा संस्कृत विश्वविद्यालय, कामेश्वरनगर, दरभंगा, के पदनाम से [भारतीय स्टेट बैंक K.S.D.S. शाखा दरभंगा ] बैंक ड्राफ्ट द्वारा पहले ही प्रेषणीय है। आदेश के उपरान्त प्रोफोरमा देयक भेजा जायगा। अथवा प्रकाशनमूल्य की राशि अग्रिम भेजकर किसी निकटस्थ बैंक के माध्यम से भी मंगवाया जा सकता है।

विशेषः—त्रैमासिक शोधपत्रिका "विश्वमनीषा" १५/रु० वार्षिक [ विगत ७ वर्षों से संचालित ] मूल्य भेजने पर प्राप्य है।

प्राप्तिस्थान—

*प्रकाशन विभाग*

कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालय, दरभङ्गा